॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तद्धिते

## भवनाद्यर्थकाः, मत्वर्थीयाः, प्राग्दिशीयाः, प्रागिवीयाः, स्वार्थिकाः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।




संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

परामर्शकौ

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar


प्रस्तोता

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

14.01.2024

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

# लघुसिद्धान्तकौमुद्याम् तद्धितेषु भवनाद्यर्थकाः

# भवनाद्यर्थकाः/ पाञ्चमिकाः

## अथ पञ्चमाध्याये द्वितीय पादः



५.२.१ धान्यानां भवने क्षेत्रे खञ्
५.२.२ व्रीहिशाल्योर्ढक्
५.२.३ यवयवकषष्टिकाद्यत्
५.२.४ विभाषा तिलमाषोमाभङ्गाऽणुभ्यः
५.२.५ सर्वचर्मणः कृतः खखञौ
५.२.६ यथामुखसंमुखस्य दर्शनः खः
५.२.७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति
५.२.८ आप्रपदं प्राप्नोति
५.२.९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु
५.२.१० परोवरपरम्परपुत्रपौत्रमनुभवति
५.२.११ अवारपारात्यन्तानुकामं गामी
५.२.१२ समांसमां विजायते
५.२.१३ अद्यश्वीनाऽवष्टब्धे
५.२.१४ आगवीनः
५.२.१५ अनुग्वलंगामी
५.२.१६ अध्वनो यत्खौ
५.२.१७ अभ्यमित्राच्छ च
५.२.१८ गोष्ठात् खञ् भूतपूर्वे

५.२.१९ अश्वस्यैकाहगमः
५.२.२० शालीनकौपीने अधृष्टाकार्ययोः
५.२.२१ व्रातेन जीवति
५.२.२२ साप्तपदीनं सख्यम्
५.२.२३ हैयङ्गवीनं संज्ञायाम्
५.२.२४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ
५.२.२५ पक्षात्तिः
५.२.२६ तेन वित्तश्चुञ्चुप्चणपौ
५.२.२७ विनञ्भ्यां नानाञौ नसह
५.२.२८ वेः शालच्छङ्कटचौ
५.२.२९ सम्प्रोदश्च कटच्
५.२.३० अवात् कुटारच्च
५.२.३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः
५.२.३२ नेर्बिडज्बिरीसचौ नेः
५.२.३३ इनच्पिटच्चिकचि च
५.२.३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः
५.२.३५ कर्मणि घटोऽठच्
५.२.३६ तदस्य संजातं तारकादिभ्य इतच्

५.२.३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः
५.२.३८ पुरुषहस्तिभ्यामण् च
५.२.३९ यद्तदेतेभ्यः परिमाणे वतुप्
५.२.४० किमिदंभ्यां वो घः
५.२.४१ किमः संख्यापरिमाणे डति च
५.२.४२ संख्याया अवयवे तयप्
५.२.४३ द्वित्रिभ्यां तयस्यायज्वा
५.२.४४ उभादुदात्तो नित्यम्
५.२.४५ तदस्मिन्नधिकमिति दशान्ताड्डः
५.२.४६ शदन्तविंशतेश्च
५.२.४७ संख्याया गुणस्य निमाने मयट्
५.२.४८ तस्य पूरणे डट्
५.२.४९ नान्तादसंख्यादेर्मट्
५.२.५० थट् चच्छन्दसि
५.२.५१ षट्कतिकतिपयचतुरां थुक्
५.२.५२ बहुपूगगणसंघस्य तिथुक्
५.२.५३ वतोरिथुक्
५.२.५४ द्वेस्तीयः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भवनाद्यर्थकाः

# भवनाद्यर्थकाः/ पाञ्चमिकाः



५.२.५५ त्रेः सम्प्रसारणं च
५.२.५६ विंशत्यादिभ्यस्तमडन्यतरस्याम्
५.२.५७ नित्यं शतादिमासार्धमाससंवत्सराच्च
५.२.५८ षष्ट्यादेश्चासंख्यादेः
५.२.५९ मतौ छः सूक्तसाम्नोः
५.२.६० अध्यायानुवाकयोर्लुक्
५.२.६१ विमुक्तादिभ्योऽण्
५.२.६२ गोषदादिभ्यो वुन्
५.२.६३ तत्र कुशलः पथः
५.२.६४ आकर्षादिभ्यः कन्
५.२.६५ धनहिरण्यात् कामे
५.२.६६ स्वाङ्गेभ्यः प्रसिते
५.२.६७ उदराट्ठगाद्यूने
५.२.६८ सस्येन परिजातः
५.२.६९ अंशं हारी
५.२.७० तन्त्रादचिरापहृते
५.२.७१ ब्राह्मणकोष्णिके संज्ञायाम्
५.२.७२ शीतोष्णाभ्यां कारिणि

५.२.७३ अधिकम्
५.२.७४ अनुकाभिकाभीकः कमिता
५.२.७५ पार्श्वेनान्विच्छति
५.२.७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ
५.२.७७ तावतिथं ग्रहणमिति लुग्वा
५.२.७८ स एषां ग्रामणीः
५.२.७९ शृङ्खलमस्य बन्धनं करभे
५.२.८० उत्क उन्मनाः
५.२.८१ कालप्रयोजनाद्रोगे
५.२.८२ तदस्मिन्नन्नं प्राये संज्ञायाम्
५.२.८३ कुल्माषादञ्
५.२.८४ श्रोत्रियंश्छन्दोऽधीते
५.२.८५ श्राद्धमनेन भुक्तमिनिठनौ
५.२.८६ पूर्वादिनिः
५.२.८७ सपूर्वाच्च
५.२.८८ इष्टादिभ्यश्च
५.२.८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि
५.२.९० अनुपद्यन्वेष्टा

५.२.९१ साक्षाद्द्रष्टरि संज्ञायाम्
५.२.९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः
५.२.९३ इन्द्रियमिन्द्रलिंगमिन्द्र-दृष्टमिन्द्र-सृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा

रक्तवर्णेन निर्दिष्टानि सूत्राण्येव लघुकौमुद्यां विवेचितानि सन्ति।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भवनाद्यर्थकाः

# ‘भवनं क्षेत्रम्’ इत्यर्थे ‘खञादि’-प्रत्ययानां विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ‘उत्पत्तिस्थानं क्षेत्रम्’ इत्यर्थे खञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— धान्यानां भवने क्षेत्रे खञ् (५,२.१)**

अर्थः— षष्ठ्यन्तात् समर्थात् धान्यवाचिशब्दात् ‘भवनं क्षेत्रम्’ इत्यर्थे ‘खञ्’प्रत्ययः स्यात्।

- भवत्यस्मिन्निति भवनम्= उत्पत्तिस्थानम्। (करणाधिकरणयोश्च— ल्युँट्)
- मुद्गानां भवनं क्षेत्रं= मौद्गीनम्॥

❖ ‘उत्पत्तिस्थानं क्षेत्रम्’ इत्यर्थे ढक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— व्रीहिशाल्योर्ढक् (५,२.२)**

अर्थः—षष्ठ्यन्तसमर्थ‘व्रीहि-शालि’शब्दाभ्यां ‘भवनं क्षेत्रम्’ इत्यर्थे ‘ढक्’प्रत्ययः स्यात्।

- व्रैहेयम्। शालेयम्॥

○ ‘हैयङ्गवीनम्’ इत्यस्य निपातनार्थं विधिसूत्रम्—

**सूत्रम्— हैयङ्गवीनं सञ्ज्ञायाम् (५,२.२३)**

अर्थः—ह्योगोदोहशब्दस्य ‘हियङ्गु’रादेशः, विकारार्थे खञ्च निपात्यते।[१]

- दुह्यते इति दोहः= क्षीरम्। ह्योगोदोहस्य विकारः – हैयङ्गवीनं= नवनीतम्॥

(अकर्तरि च कारके सञ्ज्ञायाम्— कर्मणि घञ्)

१. नवनीते निपातितोऽयम्, इति चेन्नै संस्करणे पाठः।

मुद्गानां भवनं क्षेत्रम्
मुद्ग आम्+ खञ्
मौद्ग्+ ईन
मौद्गीनम्

| व्रीहीणां भवनं क्षेत्रम् | शालीनां भवनं क्षेत्रम् |
|---|---|
| व्रीहि आम्+ ढक् | शालि आम्+ ढक् |
| व्रैह् + एय | शाल् + एय |
| व्रैहेयम् | शालेयम् |

ह्योगोदोहस्य विकारः=
कल को दुहे गये गोदुग्ध का विकार
ह्योगोदोह ङस्+ खञ्
हियङ्गु+ ईन
हैयङ्गो+ ईन= हैयङ्गवीनम्

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भवनाद्यर्थकाः

# ‘अस्य सञ्जातम्’ इत्यर्थे ‘इतच्’प्रत्ययः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ ‘अस्य सञ्जातम्’ इत्यर्थे ‘इतच्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तदस्य सञ्जातं तारकादिभ्य इतच् (५,२.३६)**

अर्थः— प्रथमान्तसमर्थेभ्यः तारकादिभ्यः ‘सञ्जातमस्य= उत्पन्न हो गया है इसका।’ इत्यर्थे तद्धितसञ्ज्ञकः ‘इतच्’ प्रत्ययः स्यात्॥

- तारकाः सञ्जाता अस्य= **तारकितं** नभः।
- पण्डितः। आकृतिगणोऽयम्॥

{मूलपाठः}

तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। सूचक। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम। प्रचार। तन्द्रा। वेग। पुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। स्तबक, अङ्गार, वर्णक, बुभुक्षा, निद्रा, कर्णक, फल, उच्चार, पल्लव, अग्र, अङ्गारक, पुलक, कुवलय, शैवल, गर्व, तरङ्ग, कल्लोल, पण्डा, हस्तक, सीमन्त, कर्दम, कज्जल, कलङ्क, कुतूहल, कन्दल, अन्धकार, कारक, अङ्कुर, रोमाञ्च, हर्ष, उत्कर्ष, क्षुध, ज्वर, गर, दोह, शास्त्र, मुकुर, तिलक, चन्द्रक, मुद्रा, राग, मञ्जरी, शृङ्गार, तृष, वृण, गर्ध, गौरव, स्थपुट, कञ्चुक, बकुल, श्वभ्र, वर्म, अराल, मूर्धा, प्रतिबिम्ब, विघ्न, तन्त्र, प्रत्यय, दीक्षा, गर्ज
गणसूत्रम्— गर्भादप्राणिनि। तन्द्रा। स्रवक। कर। आन्दोल। गोर। राग।
तारकादिराकृतिगणः।

**तारकाः सञ्जाता अस्य (नभसः)**

तारे उत्पन्न हो गये हैं इसके, ऐसा आकाश

तारका जस्+ इतच्
तारका + इत
तारक् + इत
तारकितम् (नभः)

सद्-असद्-विवेकशालिनी बुद्धिः= पण्डा

**पण्डा सञ्जाता अस्य (पुरुषस्य)**

सत् और असत् का विवेक करने वाली बुद्धि उत्पन्न हो गई है जिसकी।

पण्डा सुँ+ इतच्
पण्ड्+ इत
पण्डितः (पुरुषः)

# ‘प्रमाणमस्य’ इत्यर्थे द्वयसच्-दघ्नच्-मात्रच्-प्रत्ययविधानम्



❖ ‘प्रमाणम्’ इत्यर्थे द्वयसच्-दघ्नच्-मात्रच्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— प्रमाणे द्वयसज्दघ्नञ्मात्रचः (५,२.३७)**

○ तदस्येत्यनुवर्तते।

**अर्थः—** ‘तत्प्रमाणमस्य’ इत्यर्थे प्रमाणे वर्तमानात् प्रातिपदिकाद् ‘द्वयजच्-दघ्नच्-मात्रच्’ इत्येते त्रयस्तद्धितप्रत्ययाः स्युः।

○ ऊरु प्रमाणमस्य = ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम्॥

ऊरु प्रमाणमस्य
ऊरु औ + द्वयसच्
ऊरु + द्वयस
ऊरुद्वयसम्

ऊरु औ + दघ्नच्
ऊरु + दघ्न
ऊरुदघ्नम्

ऊरु औ + मात्रच्
ऊरु + मात्र
ऊरुमात्रम्





कियन्मात्रं जलं विप्र! जानुदघ्नं नराधिप! ।
तथापीयमवस्था ते, नहिं सर्वे भवादृशाः॥

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम, इति भाष्यम्।
तत्र परिच्छेदकमात्रे मात्रच्।

# परिमाणे वतुँप्-प्रत्ययविधानम्



{मूलपाठः}

❖ 'परिमाणम्' इत्यर्थे वतुँप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— यत्तदेतेभ्यः परिमाणे वतुँप् (५,२.३९)**

अर्थः— 'तत्परिमाणमस्य' इत्यर्थे परिमाणे वर्तमानेभ्यः प्रथमान्तेभ्यः 'यद्-तद्-एतद्-शब्देभ्यस्तद्धितसञ्ज्ञको 'वतुँप्' प्रत्ययः स्यात्।

- यत्परिमाणमस्य= यावान्।
- तावान्।
- एतावान्॥

यत् परिमाणमस्य
यद् सुँ + वतुँप्
य आ+ वत् (आ सर्वनाम्नः)
यावात्+ सुँ (अत्वसन्तस्य चाधातोः)
यावान् त् + स् (उगिदचां सर्व...)
यावान् (हल्ङ्यादि.., संयोगान्त.)
यावान्

ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः।
आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वतः॥

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भवनाद्यर्थकाः



# मापनस्य प्रकाराः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः






## ऊर्ध्वमानं किलोन्मानं, परिमाणन्तु सर्वतः।
## आयामस्तु प्रमाणं स्यात्, सङ्ख्या बाह्या तु सर्वतः॥




आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्-५.१.१९
इति सूत्रे काशिकातः



अर्थ— मापन के प्रकारों में उन्मान के दो प्रकार हैं- १. ऊर्ध्वमान= ऊँचाई का नाप, आजकल इंच तथा फीट।
२. किलोन्मान= किलोग्राम के माध्यम से तराजू पर रखकर सब्जी फल इत्यादि तौलना। सर्वतः= धातु के पात्र या काष्ठ पात्र में भरकर वस्तुओं के मापन प्रकार को परिमाण कहते हैं। जैसे लीटर से दूध जैसी तरल वस्तुओं को मापना, काष्ठ पात्र द्रोण में भरकर चावल मापना इत्यादि। आयाम= मार्ग या खेत की दीर्घता के मापन को प्रमाण कहते हैं। जिसे आजकल मीटर, मील, कोश, अङ्गुल , वितस्ति, हस्त इत्यादि कहते हैं। इन सभी मापन के प्रकारों से सङ्ख्या बाह्या= बाहर है। सङ्ख्या के द्वारा भी मापन होता है, जैसे- १ दर्जन केले अर्थात् १२ केले, ६४ योगिनी इत्यादि।

# किम्-इदम्-शब्दाभ्यां परिमाणे वतुँप्-प्रत्ययविधानम्



{मूलपाठः}

❖ वतुँप्सन्नियोग-घादेशविधायकं विधिसूत्रम्—

**सूत्रम्— किमिदंभ्यां वो घः (५,२.४०)**

अर्थः— आभ्यां वतुँप् स्याद्, वकारस्य घश्च॥

❖ ईश्+की-इत्यादेशविधायकं विधिसूत्रम्—

**सूत्रम्— इदंकिमोरीश्की (६,३.९०)[१]**

अर्थः— दृग्दृशवतुषु इदम ईश्, किमः की[२]।

- किायान्।
- इयान्॥

१. इमे द्वे सूत्रे चेन्नै संस्करणे न स्तः।

२. कुत्रचित् संस्करणे 'किः' इति ह्रस्वान्तः पाठः सम्यक् न प्रतिभाति। कीदृशः इति प्रयोगसिद्ध्यर्थं तस्योपयोगः।

**किं परिमाणमस्य**

किम् सुँ + वतुँप्

किम् + घत्

किम् + इयत् (आयनेयीनी..)

की + इयत्

क् + इयत् (यस्येति च)

कियत्= कियान्

**इदं परिमाणमस्य**

इदम् + वतुँप्/ घत्

इदम् + इयत् (आयनेयीनी..)

ईश्+ इयत् (आयनेयीनी..)

+ इयत् (यस्येति च)

इयत्= इयान्

लघुसिद्धान्तकौमुद्याम् तद्धितेषु भवनाद्यर्थकाः

# सङ्ख्यावाचकाद् अवयवा अस्य इत्यर्थे 'तयप्-प्रत्ययः' तस्य अयजादेश्च

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ तयप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सङ्ख्याया अवयवे तयप् (५,२.३९)**

अर्थः— अवयवे वर्तमानात् सङ्ख्यावाचकात् प्रथमान्तात् प्रातिपदिकाद् 'अवयवा अस्य'= अवयविरूपे (अवयव हैं इसके= अवयवी के) इत्यर्थे तद्धितसञ्ज्ञकः 'तयप्'प्रत्ययः स्यात्।

○ पञ्च अवयवा अस्य= पञ्चतयम्॥

❖ तयपः स्थाने 'अयच्'इत्यादेशविधायकं विधिसूत्रम्—

**सूत्रम्— द्वि-त्रिभ्यां तयस्यायज्वा (५,२.४३)**

अर्थः— द्वि-त्रिभ्यां परस्य तयस्य 'अयच्' इत्यादेशो वा स्यात्।

○ द्वयम्, द्वितयम्। त्रयम्, त्रितयम्॥

❖ तयपः स्थाने 'अयच्'इत्यादेशविधायकं विधिसूत्रम्—

**सूत्रम्— उभादुदात्तो नित्यम् (५,२.४४)**

अर्थः—उभशब्दात् तयपोऽयच् स्यात्, स चाद्युदात्तः।

○ उभयम्॥ (चेन्नै संस्करणेऽत्रैव 'पाञ्चमिकप्रकरणस्य' समाप्तिः सूचिता।)

पञ्च अवयवा अस्य (अवयविनः)
पञ्चन् जस्+ तयप्
पञ्च + तय
पञ्चतयम् (स्त्रीत्वे ङीप्)

द्वौ अवयवौ अस्य
द्वि औ+ तयप्
द्वि+ अयच्
द्व् + अय
द्वयम्, द्वितयम्

त्रयोऽवयवा अस्य
त्रि जस्+ तयप्
त्रि+ अयच्
त्र्+ अय
त्रयम्, त्रितयम्

उभौ अवयवौ अस्य (अवयविनः)
उभ औ+ तयप्
उभ+ अयच्
उभ्+ अय
उभयम् (स्त्रीत्वे ङीप्)

# पूरणार्थे डट्-प्रत्ययस्य प्रक्रिया



{मूलपाठः}

❖ डट्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तस्य पूरणे डट् (५,२.४८)**

अर्थः— षष्ठीसमर्थात् सङ्ख्यावाचिनः प्रातिपदिकात् 'पूरणः' इत्यस्मिन्नर्थे तद्धितसञ्ज्ञको 'डट्'प्रत्ययः स्यात्।

- एकादशानां पूरणः= एकादशः॥

❖ डटः 'मँट्'आगमविधायकं विधिसूत्रम्—

**सूत्रम्— नान्तादसङ्ख्यादेर्मँट् (५,२.४९)**

अर्थः— असङ्ख्यादेर्नान्तसङ्ख्याशब्दात् विहितस्य डटो मँडागमः स्यात्।

सङ्ख्या आदिर्यस्य तत् सङ्ख्यादिः।
न सङ्ख्यादि असङ्ख्यादि, तस्माद् असङ्ख्यादेः।

- पञ्चानां पूरणः= पञ्चमः।
- नान्तात्किम् ? –

पूर्यते अनेन इति= पूरणः= पूरा करने वाला अवयव। करणे ल्युट्। यस्मात् सङ्ख्यावाचिनः प्रत्ययविधिः तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्यय इति निष्कर्षः।

एकादशानां पूरणः=
एकादशत्व सङ्ख्या को पूरा करने वाला अवयव
एकादशन् आम्+ डट्
एकादश् + अ (टेः)
एकादशः। एकादशम्।
स्त्रीत्वे टित्वात् ङीप्— एकादशी।

पञ्चानां पूरणः
पञ्चत्व सङ्ख्या को पूरा करने वाला अवयव
पञ्चन् आम्+ डट्
पञ्चन् + मँट् अ
पञ्च + म (नलोपः प्रातिपदिकान्तस्य)
पञ्चमः। पञ्चमम्। पञ्चमी

# पूरणार्थे डट्-प्रत्ययस्य प्रक्रिया



{मूलपाठः}

❖ विंशतेर्भस्य ति-इत्यस्य लोपविधायकं विधिसूत्रम्—

**सूत्रम्— ति विंशतेर्डिति (६,४.१४२)**

अर्थः— विंशतेर्भस्य तिशब्दस्य लोपो डिति परे।

- विंशः।
- असङ्ख्यादेः किम् ? एकादशः॥

❖ थुँक्-आगमविधायकं विधिसूत्रम्—

**सूत्रम्— षट्-कति-कतिपय-चतुरां थुँक् (५,२.५१)**

अर्थः— एषां= षट्-कति-कतिपय-चतुरां थुँगागमः स्याड्डिटि।

- षण्णां (पूरणः) षष्ठः।
- कतिथः।
- कतिपयशब्दस्यासङ्ख्यात्वेऽप्यत एव ज्ञापकाड्डट्। कतिपयथः।
- चतुर्थः॥ (चतुरश्छ-यतौ आद्यक्षरलोपश्च— तुरीयः तुर्यः)

**विंशतेः पूरणः**
विंशतित्व सङ्ख्या को पूरा करने वाला अवयव
विंशति ङस्+ डट्
विंश + अ (यस्येति च)
विंशः। विंशम्। विंशी।

**षण्णां पूरणः**
षष् आम्+ डट्
षष् थुँक्+ अ
षष् ठ्+ अ (ष्टुत्वम्)
षष्ठः

**कतीनां पूरणः=**
कितनों का पूरण
कति आम्+ डट्
कति थुँक्+ अ
कतिथः

**चतुर्णां पूरणः**
चतुर् आम्+ डट्
चतुर् थ्+ अ
चतुर्थः

चतुर् + छ
तुर् + ईय= तुरीयः

तुर् + यत्= तुर्यः

# पूरणार्थे द्वि-त्रिभ्यां तीय-प्रत्ययः



{मूलपाठः}

❖ द्वि-शब्दात् तीय-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— द्वेस्तीयः (५,२.५४)**

अर्थः— द्वि-शब्दात् षष्ठ्यन्तात् पूरणार्थे तीयप्रत्ययः स्यात्।

○ डटोऽपवादः।

○ द्वयोः पूरणो= द्वितीयः॥

❖ त्रिशब्दात् तीय-प्रत्ययः तथा सम्प्रसारणविधायकं विधिसूत्रम्—

**सूत्रम्— त्रेः सम्प्रसारणं च॥ (५,२.५५)**

अर्थः— त्रि-शब्दात् षष्ठ्यन्तात् पूरणार्थे तीयप्रत्ययः स्यात्, तत्सन्नियोगेन त्रिशब्दस्य सम्प्रसारणञ्च।

○ तृतीयः॥

द्वयोः पूरणः

द्वित्व सङ्ख्या को पूरा करने वाला अवयव

द्वि ओस्+ तीय

द्वि + तीय

द्वितीयः। द्वितीयम्। द्वितीया।

त्रयाणां पूरणः

त्रित्व सङ्ख्या को पूरा करने वाला अवयव

त्रि आम्+ तीय

त्रि + तीय

त् ऋ इ + तीय (सम्प्रसारणाच्च)

तृतीयः। तृतीयम्। तृतीया।

# ‘श्रोत्रियः’ इति निपातनम्



❖ ‘श्रोत्रियः’ इति निपातनार्थं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— श्रोत्रियंश्छन्दोऽधीते (५,२.८४)** (पदवचनपक्षः)

**अर्थः—** ‘वेदं पठति’ इत्यर्थे घन्-प्रत्ययान्तः ‘श्रोत्रियन्’ इति निपात्यते।

‘छन्दस्’ शब्दात् ‘घन्’ प्रत्ययः, प्रकृतेः श्रोत्रादेशश्च निपात्यते।

- श्रोत्रियः।
- ‘वा’ इत्यनुवृत्तेः छान्दसः॥

अयं भावः— ‘तावतिथं ग्रहणं लुग्वा’-५.२.७७ इति सूत्रात् मण्डूकोप्लुत्या ‘श्रोत्रियंश्छन्दोऽधीते’ इत्यस्मिन् सूत्रे ‘वा’ इत्यनुवर्तनाद् अधीते इत्यर्थे ‘तदधीते तद्वेद’ इत्यनेन अणि कृते ‘छन्दस् अम्+ अण्’ = ‘छान्दसः’ इति रूपमपि सिद्ध्यति।

**छन्दोऽधीते**
छन्दस् अम्+ घन्
श्रोत्र + इय
श्रोत्र् + इय
श्रोत्रियः

**छन्दोऽधीते वेद वा**
छन्दस् अम्+ अण्
छन्दस् + अण्
छान्दस् + अ
छान्दसः

वेदस्य एकां शाखाम् अधीत्य श्रोत्रियो भवति।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥ (अत्रिसंहिता-१४०)

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भवनाद्यर्थकाः

# इनिँ-प्रत्ययः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ इन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पूर्वादिनिः (५,२.८६)**

अर्थः— क्रियाविशेषणात् पूर्वशब्दात् 'अनेन' इत्यर्थे कर्त्रर्थे इनिँ स्यात्।

○ पूर्वं कृतमनेन= पूर्वी॥

❖ इन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सपूर्वाच्च (५,२.८७)**

अर्थः— विद्यमानपूर्वात् पूर्वशब्दाद् 'अनेन' इत्यर्थे कर्त्रर्थे इनिँ स्यात्।

○ कृतपूर्वी॥

❖ इन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इष्टादिभ्यश्च (५,२.८८)**

अर्थः— प्रथमान्तेभ्य इष्टादिभ्यः 'अनेन' इत्यर्थे कर्त्रर्थे इनिँ स्यात्।

○ इष्टमनेन= इष्टी। अधीती॥

॥ इति भवनाद्यर्थकाः॥ १२॥

पूर्वं कृतमनेन (पहले कर चुका व्यक्ति।)
पूर्व अम्+ इनिँ
पूर्व + इन्
पूर्विन् (सौ च, हल्ङ्या.. नलोपः..)
पूर्वी

पूर्वं कृतमनेन (पहले कर चुका व्यक्ति।)
कृतपूर्वम् (सुँप्सुँपासमासः)+ इनिँ
कृतपूर्व सुँ+ इनिँ
कृतपूर्विन् (सौ च, हल्ङ्या.. नलोपः..)
कृतपूर्वी

इष्ट सुँ+ इनिँ
इष्टी

अध्ययन कर चुका व्यक्ति
अधीत सुँ+ इनिँ
अधीती

# अथ मत्वर्थीयाः



५.२.९४ तदस्यास्त्यस्मिन्निति मतुँप्
५.२.९५ रसादिभ्यश्च
- गुणवचनेभ्यो मतुँपो लुक्।

५.२.९६ प्राणिस्थादातो लजन्यतरस्याम्
- प्राण्यङ्गादेव।

५.२.९७ सिध्मादिभ्यश्च
५.२.९८ वत्सांसाभ्यां कामबले
५.२.९९ फेनादिलच् च
५.२.१०० लोमादिपामादिपिच्छादिभ्यः शनेलचः
- विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः।

५.२.१०१ प्रज्ञाश्रद्धार्चाभ्यो णः
- वृत्तेश्च।

५.२.१०२ तपःसहस्राभ्यां विनीनी
५.२.१०३ अण् च
- ज्योत्स्नादिभ्य उपसंख्यानम्।

५.२.१०४ सिकताशर्कराभ्यां च
५.२.१०५ देशे लुबिलचौ च
५.२.१०६ दन्त उन्नत उरच्
५.२.१०७ ऊषसुषिमुष्कमधो रः
- रप्रकरणे ख-मुख-कुञ्जेभ्य उपसंख्यानम्।
- नगपांसुपाण्डुभ्यश्च।
- कच्छ्वा ह्रस्वत्वं च।

५.२.१०८ द्युद्रुभ्यां मः
५.२.१०९ केशाद्वोऽन्यतरस्याम्
- अन्येभ्योऽपि दृश्यते इति वक्तव्यम्।
- अर्णसो लोपश्च।
- छन्दसीवनिपौ च।
- मेधारथाभ्यामिरनिरचौ वक्तव्यौ।

५.२.११० गाण्ड्यजगात् संज्ञायाम्
५.२.१११ काण्डाण्डादीरन्नीरचौ
५.२.११२ रजःकृष्यासुतिपरिषदो वलच्
- अन्येभ्योऽपि दृश्यते।

# अथ मत्वर्थीयाः





५.२.११३ दन्तशिखात् संज्ञायाम्
५.२.११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः
५.२.११५ अत इनिठनौ
५.२.११६ व्रीह्यादिभ्यश्च
- शिखामालासंज्ञादिभ्य इनिः ।
- यवखदादिभ्य इकः ।
- अन्येभ्य उभयम् ।

५.२.११७ तुन्दादिभ्य इलच् च
५.२.११८ एकगोपूर्वाट्ठञ् नित्यम्
५.२.११९ शतसहस्रान्ताच्च निष्कात्
५.२.१२० रूपादाहतप्रशंसयोर्यप्
- अन्येभ्योऽपि दृश्यते ।

५.२.१२१ अस्मायामेधास्रजो विनिः

५.२.१२२ बहुलं छन्दसि
- आमयस्योपसङ्ख्यानम् दीर्घश्च ।
- शृङ्गवृन्दाभ्यामारकन् ।
- फलबर्हाभ्यामिनच् ।
- हृदयाच्चालुरन्यतरस्याम् ।
- शीतोष्णतृप्रेभ्यस्तदसहने ।
- हिमाच्चेलुः ।
- बलादूलः ।
- वातात्समूहे च ।
- तप्पर्वमरुद्भ्याम् ।

५.२.१२३ ऊर्णाया युस्
५.२.१२४ वाचो ग्मिनिः
५.२.१२५ आलजाटचौ बहुभाषिणि
- कुत्सित इति वक्तव्यम् ।

# अथ मत्वर्थीयाः





५.२.१२६ स्वामिन्नैश्वर्ये
५.२.१२७ अर्शआदिभ्योऽच्
५.२.१२८ द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः
५.२.१२९ वातातिसाराभ्यां कुँक् च
- पिशाचाच्च ।

५.२.१३० वयसि पूरणात्
५.२.१३१ सुखादिभ्यश्च
५.२.१३२ धर्मशीलवर्णान्ताच्च
५.२.१३३ हस्ताज्जातौ
५.२.१३४ वर्णाद्ब्रह्मचारिणि

अष्टाध्याय्यां ३६ मत्वर्थीय-प्रत्ययाः वर्णिताः

५.२.१३५ पुष्करादिभ्यो देशे
- बाहूरु पूर्वाद्बलात् ।
- सर्वादेश्च ।
- अर्थाच्चासंनिहिते ।
- तदन्ताच्च ।

५.२.१३६ बलादिभ्यो मतुबन्यतरस्याम्
५.२.१३७ संज्ञायां मन्माभ्याम्
५.२.१३८ कंशंभ्यां बभयुस्तितुतयसः
५.२.१३९ तुन्दिवलिवटेर्भः
५.२.१४० अहंशुभमोर्युस्

॥ इति द्वितीयः पादः॥

तेषु लघुसिद्धान्तकौमुद्यां १३ प्रत्ययाः

# मतुँप्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ मतुँप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तदस्यास्त्यस्मिन्निति मतुँप् (५,२.९४)**

अर्थः— प्रथमान्तात् प्रातिपदिकात् 'अस्यास्ति' 'अस्मिन्नस्ति' इत्यर्थे वा 'मतुँप्' प्रत्ययः स्यात्।

○ गावोऽस्यास्मिन्वा सन्ति= गोमान्॥

'अस्ति' इत्यत्र पुरुषवचने न विवक्षिते, वर्तमानकालस्तु विवक्षित एव; अत एव 'गावोऽस्यासन्' इति विग्रहे 'गोमान्' इति न प्रयोगः। 'गोमानासीत्' इति प्रयोगस्तु तथाव्यवहारविषय आसीदित्यर्थकः॥

इति शब्दो विषयविशेष लाभार्थः—

**भूम-निन्दा-प्रशंसासु नित्ययोगे-ऽतिशायने।**
**संसर्गे-ऽस्ति विवक्षायां भवन्ति मतुबादयः॥**

अर्थः— वार्त्तिककारस्य मते अस्य सूत्रस्य प्रयोगः १. भूम्नि— धनवान्, गोमान्। २.निन्दायाम्— वाचालः, कुष्ठी। ३.प्रशंसायाम्— गुणवान्, रूपवान्। नित्ययोगे— लोमशः, क्षीरिणो वृक्षाः। ५.अतिशायने— उदरिणी, बलवान् ६.संसर्गे – दण्डी, छत्री। एतेषु षट्सु विषयेषु एव भवति।

गावोऽस्यास्मिन्वा सन्ति
गो जस्+ मतुँप्
गो + मात्+ सुँ (अत्वसन्तस्य चाधातोः)
गो + मान् त् + स् (उगिदचां...)
गो + मान् (हल्ङ्याभ्य...., संयोगा..
गोमान्

## मतुँबर्थीयात् पुनः सरूपः मतुँबर्थिकः प्रत्ययः न ।



यदि किञ्चन प्रातिपदिकं मतुँप्-प्रत्ययेन निर्मितमस्ति, तर्हि तस्मात् प्रातिपदिकात् 'अस्य अस्ति' तथा 'अस्मिन् अस्ति' एतयोः अर्थयोः पुनः सः एव मतुँप्-प्रत्ययः न भवति । एतदेव स्पष्टीकर्तुम् वार्त्तिककारः एकं श्लोकवार्त्तिकं पठति –

शैषिकात् मतुँबर्थीयात् शैषिको मतुँबर्थिकः ।
सरूपः प्रत्ययो नेष्टः, सन्नन्तात् न सन्निष्यते ॥

अर्थः— शैषिकाप्रत्ययात् पुनः सरूपशैषिकप्रत्ययः न भवति। मतुबर्थीयात् पुनः सरूपः (= identical) मतुबर्थिकः प्रत्ययः न भवति । सन्नन्तादपि पुनः सन्नन्तप्रत्ययः न भवति।

यथा – 'गावः अस्य अस्ति सः गोमान्' इत्यत्र 'गोमान्' शब्दः मतुबर्थे सिद्ध्यति । अयम् मतुँप्-प्रत्ययान्तः शब्दः अस्ति, अतः 'गोमान् यस्मिन् अस्ति' इति स्थिते 'गोमत्' शब्दात् पुनः यद्यपि मतुँप्-प्रत्ययः प्राप्नोति, तथापि सः न विधीयते ।

यत्र 'असरूपः' प्रत्ययः भवति, तत्र तु तस्य प्रयोगे न बाधा विद्यते । यथा - दण्डः अस्य अस्ति सः दण्डी (= इनि-प्रत्ययः), दण्डिनः यस्याम् सन्ति सा दण्डिमती शाला (= मतुँप्-प्रत्ययः) ।

# मतुँप्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ भसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— तसौ मत्वर्थे (१,४.१९)**

अर्थः— तान्त-सान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे।

- गरुत्मान्।
- वसोः संप्रसारणम्— विदुष्मान्।

**वार्तिकम्— (गुणवचनेभ्यो मतुँपो लुगिष्टः)।**

अर्थः— गुणे गुणिनि च प्रसिद्धेभ्यः शुक्लादिभ्यः मतुँपो लुक् स्यात्।

- शुक्लो गुणोऽस्यास्तीति= शुक्लः पटः। कृष्णः॥

गरुतौ = पक्षौ स्तः अस्य
गरुत् औ+ मतुँप्
गरुत् + मत्
गरुत्मान्

विद्वांसः सन्त्यस्य अस्मिन् वा
विद्वस् जस्+ मतुँप्
विदुष्+ मत्
विदुष्मान्

शुक्लो गुणोऽस्यास्तीति (पटः)
शुक्ल सुँ+ मतुँप्
शुक्लः (पटः)

गुणे शुक्लादयो पुंसि, गुणि लिङ्गास्तु तद्वति।

# लच्-प्रत्ययस्य निरूपणम्



❖ लच्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— प्राणिस्थादातो लजन्यतरस्याम्** (५,२.९६)

**अर्थः—** प्राण्यङ्गवाचिनः प्राणिस्थाद् आकारान्तात् प्रथमासमर्थात् मतुँबर्थे 'लच्' प्रत्ययो वा स्यात्।

- चूडालः, चूडावान्।
- प्राणिस्थात्किम् ? शिखावान् दीपः।
- **भाष्यवार्तिकम्—** प्राण्यङ्गादेव[1]।
- नेह[2]— मेधावान्॥

१.चेन्नै संस्करणे इदं वार्तिकरूपेणोदाहृतम्।
२. बहुषु संस्करणेष्विदं नास्ति।

✓ अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
इति स्वाङ्गलक्षणात् मेधायाः अमूर्तत्वात् न स्वाङ्गत्वमिति भावः।

(चूडा शिखा केशपाशः इत्यमरः)

चूडा अस्ति अस्य
चूडा सुँ+ लच्
चूडालः

चूडा अस्ति अस्य
चूडा सुँ+ मतुँप्
चूडा + मात्+ सुँ (अत्वसन्तस्य चाधातोः)
चूडा + मान् त् + स् (उगिदचां...)
चूडामान् (मादुपधाया मतोऽर्वयवादिभ्यः)
चूडावान्

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु मत्वर्थीयाः

# श-न-इलच्-प्रत्ययस्य निरूपणम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ श-न-इलच्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— लोमादि-पामादि-पिच्छादिभ्यः शनेलचः**

**अर्थः—** (मतुँबर्थे) लोमादिभ्यः शः— लोमशः। लोमवान्। रोमशः। रोमवान्। ‘प्राणिस्थाद्...’ इत्यतः अन्यतरस्यामनुवर्तते।

- पामादिभ्यो नः— पामनः। (ग. सू.)— अङ्गात्कल्याणे। अङ्गना। (ग. सू.)— लक्ष्म्या अच्च। लक्ष्मणः।
- पिच्छादिभ्य इलच्— पिच्छिलः। पिच्छवान्॥

लोमानि सन्ति अस्य
लोम जस्+ श
लोमशः

रोमाणि सन्ति अस्य
रोम जस्+ श
रोमशः

कल्याणि अङ्गानि सन्ति अस्याः
अङ्ग जस्+ न
अङ्गना। अङ्गवती

लक्ष्मीः अस्ति अस्य
लक्ष्म+ न
लक्ष्मणः। लक्ष्मीवान्

- लोमादिगणः — लोमन्, रोमन्, वल्गु, बभ्रु, हरि, कपि, शुनि, तरु।
- पामादिगणः — पामन्, वामन्, हेमन्, श्लेष्मन्, कद्रु, बलि, श्रेष्ठ, पलल, सामन्, गणसूत्रम्— अङ्गात् कल्याणे। गणसूत्रम्— शाकी-पलाली-दद्र्वां ह्रस्वत्वम् च। गणसूत्रम्— विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः। गणसूत्रम्— लक्ष्म्या अच्च।
- पिच्छादिगणः — पिच्छ, उरस्, ध्रुवका, क्षुवका, गणसूत्रम्— जटाघटाकलाः क्षेपे। वर्ण, उदक, पङ्क, प्रज्ञा।

# उरच्-व-प्रत्यययोर् निरूपणम्



{मूलपाठः}

❖ उरच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— दन्त उन्नत उरच् (५,२.१०६)**

अर्थः— प्रथमासमर्थाद् दन्तशब्दाद् मतुँबर्थे 'उरच्' स्यात्, दन्ता उन्नताश्चेत्।

- उन्नता दन्ताः सन्त्यस्य= दन्तुरः॥

❖ व-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— केशाद्वोऽन्यतरस्याम् (५,२.१०९)**

अर्थः— प्रथमासमर्थात् केशशब्दाद् मतुँबर्थे 'व'प्रत्ययो वा स्यात्।

- केशवः। केशी। केशिकः। केशवान्।

**वार्तिकम्— अन्येभ्योऽपि दृश्यते।**

- (केशाद्भिन्नेभ्यः प्रातिपदिकेभ्योऽपि मतुबर्थे 'व'प्रत्ययो दृश्यते।) मणिवः।

**वार्तिकम्—अर्णसो लोपश्च।**

- (अर्णस्-शब्दाद् मतुँबर्थे वप्रत्ययः सस्य लोपश्च स्यात्।) अर्णवः॥

उन्नताः दन्ताः सन्ति अस्य
दन्त जस्+ उरच्
दन्त् + उर
दन्तुरः



प्रशस्ताः केशाः सन्ति अस्य
केश जस्+ व
केश + व
केशवः

इनिँ— केशी
ठन्— केशिकः
मतुँप्— केशवान्

मणिः अस्ति अस्य
मणि सुँ+ व
मणि + व= मणिवः



प्रभूतम् अर्णोऽस्त्यस्मिन्
अर्णस्+ व= अर्णवः

अर्णस्= जलम्।

# इन्-ठन्-प्रत्यययोर् निरूपणम्



{मूलपाठः}

❖ इन्-ठन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अत इनिँ-ठनौ (५,२.११५)**

अर्थः— प्रथमासमर्थाद् अदन्तप्रातिपदिकाद् मतुँबर्थे 'इनिँ-ठनौ' वा स्तः।

○ दण्डी। दण्डिकः॥

❖ इन्-ठन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— व्रीह्यादिभ्यश्च (५,२.११६)**

अर्थः—व्रीह्यादिभ्यः प्रातिपदिकेभ्यः मतुँबर्थे 'इनिँ-ठनौ' वा स्तः।

○ व्रीही। व्रीहिकः॥

दण्डोऽस्य अस्तीति।
दण्ड सुँ+ इनिँ
दण्ड् + इन्= दण्डिन्
दण्डीन् + सुँ (सौ च)
दण्डीन् + (हल्ङ्या...। नलोपः..)
दण्डी

दण्ड सुँ+ ठन्
दण्ड + इक= दण्डिकः
मतुँप्— दण्डवान्

❑ व्रीह्यादिगणः – व्रीहि, माया, शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन्, हंसा, यवखद, कुमारी, नौ।
गणसूत्रम्— शीर्षात् नञः। दंष्ट्रा, केका, शाला।

| | |
|---|---|
| ठन्— व्रीहिकः | मतुँप्— व्रीहिमान् |

व्रीहयः सन्त्यस्मिन्
व्रीहि जस्+ इनिँ
व्रीह् + इन्= व्रीहिन्
व्रीहिन् + सुँ = व्रीही

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु मत्वर्थीयाः

# विन्-ग्मिन्-प्रत्यययोर् निरूपणम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ विन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अस्-माया-मेधा-स्रजो विनिँः (५,२.१२१)**

**अर्थः**—असन्तात् प्रातिपदिकाद् माया-मेधा-स्रज् इत्येतेभ्यश्च मतुँबर्थे 'विनिँ'प्रत्ययो वा स्यात्।

○ यशस्वी, यशस्वान्। ○ मायावी। ○ मेधावी। ○ स्रग्वी॥

❖ ग्मिन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वाचो ग्मिनिँः (५,२.१२४)**

**अर्थः**— प्रथमान्ताद् 'वाच्'इति प्रातिपदिकात् मतुँबर्थे 'ग्मिनिँ'प्रत्ययः स्यात्।

○ वाग्ग्मी[१]॥

पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः। (श्रीमद्भागवतम्)

यशोऽस्य अस्तीति।
यशस् सुँ+ विनिँ
यशस् + विन्= यशस्विन्
यशस्वीन् + सुँ (सौ च)
(हल्ङ्या...। नलोपः..)
यशस्वी। मतुँप्— यशस्वान्

मायाऽस्ति अस्य।
विनिँ— मायावी। इनिँ— मायी।
ठन्— मायिकः। मतुँप्— मायावान्

स्रग्=माला अस्य अस्तीति।
स्रज् सुँ+ विनिँ
स्रग् + विन् (क्विँन्प्रत्ययस्य कुः)
स्रग्वीन् + सुँ (सौ च) (हल्ङ्या...। नलोपः..)
स्रग्वी, मतुँप्— स्रग्वान्

प्रशस्ता वाग् अस्ति अस्य।
वाच् सुँ+ ग्मिनिँ
वाग् + ग्मिन् (चोः कुः)

वाग् + ग्मिन् (झलां जशोऽन्ते)
वाग्ग्मीन् + सुँ (सौ च) (हल्ङ्या...। नलोपः..)
वाग्ग्मी

१- चेन्नै संस्करणे एको गकारः।

# अच्-युस्-प्रत्यययोर् निरूपणम्



{मूलपाठः}

❖ अच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अर्शआदिभ्योऽच् (५,२.१२७)**

**अर्थः**— अर्शसादिगणपठितेभ्यः प्रथमान्तेभ्यः मतुँबर्थे ‘अच्’प्रत्ययः स्यात्।

○ अर्शोऽस्य विद्यते= अर्शसः। आकृतिगणोऽयम्॥

○ युस्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अहंशुभमोर्युस्[१] (५,२.१४०)**

**अर्थः**— अहम्-शुभम्-इत्येताभ्याम् अव्ययाभ्यां मतुँबर्थे ‘युस्’ प्रत्ययः स्यात्।

○ अहंयुः= अहङ्कारवान्।

○ शुभंयुस्तु= शुभान्वितः॥

॥ इति मत्वर्थीयाः॥ १३॥

१- चेन्नै संस्करणे सूत्रेदं नास्ति।

अर्शोऽस्य विद्यते
अर्शस् सुँ+ अच्
अर्शस् + अ
अर्शसः

अहम्= अहङ्कारः अस्ति अस्य
अहम्+ युस्
अहम्+ यु (सिति च- पदसंज्ञा)
अहं+ यु (मोऽनुस्वारः)
अहयँ+ यु+सुँ (वा पदान्तस्य)
अहँय्युः , अहंयुः।

शुभम्= कल्याणम् अस्ति अस्य
शुभम्+ युस्
शुभँय्युः , शुभंयुः।

❑ अर्शआदिगणः – अर्शस्, उरस्, तुन्द, चतुर, पलित, जटा, घटा, अभ्र, कर्दम, अम्ल, लवण, । गणसूत्रम्— स्वाङ्गाद्धीनात्। गणसूत्रम्— वर्णात्। आकृतिगणोऽयम्।

# भवनाद्यर्थक-मत्वर्थीययोः परीक्षणम्

**०१. 'धान्यानां भवने क्षेत्रे खञ्' इति सूत्रे 'भवनम्' इति पदस्य कोऽर्थः?**

**क. उत्पत्तिस्थानम्**

ख. गृहम्

ग. सत्ता

घ. अनुभूतिः

**०२. 'व्रीहीणां भवनं क्षेत्रम्' इति विग्रहे किं रूपम्?**

**क. व्रैहेयम्**

ख. व्रैहीणम्

ग. व्रैहम्

घ. सर्वाणि

**०३. 'हैयङ्गवीनम्' इत्यत्र कस्मिन्नर्थे प्रत्ययो निपात्यते—**

क. भवनार्थे

**ख. विकारार्थे**

ग. अस्य सञ्जातम्

घ. परिमाणे

**०४. 'पण्डितः' इत्यत्र कःप्रत्ययः ?**

क. अत्

ख. क्त

ग. त

**घ. इतच्**

**०५. ऊरू प्रमाणमस्य इति विग्रहे किं रूपं साधु ?**

क. ऊरुद्वयसम्

ख. ऊरुदघ्नम्

ग. ऊरुमात्रम्

**घ. सर्वाणि**

**०६. 'एतावान्' इत्यत्र कः प्रत्ययः ?**

क. मतुँप्

**ख. वतुँप्**

ग. क्तवतुँ

घ. डमतुँप्

**०७. सर्वतः मापनं भवति —**

क. आयामात्

ख. किलोन्मानात्

ग. परिमाणात्

घ. सङ्ख्यातः

**०८. एतेषु कुत्र प्रत्ययभागोऽवशिष्यते—**

**क. इयान्**

ख. कियान्

ग. तावान्

घ. एतावान्

**०९. 'पञ्चतयम्' इत्यत्र 'तयप्'प्रत्ययः कस्मिन्नर्थे—**

क. परिमाणे

**ख. सङ्ख्याया अवयवे**

ग. विकारे

घ. प्रमाणे

**१०. एतेष्वशुद्धं रूपं किम्?**

क. त्रितयम्

ख. द्वितयम्

ग. उभयम्

**घ. पञ्चयम्**

**११. एकादश इत्यत्र कः प्रत्ययः ?**

क. मयट्

ख. मट्

**ग. डट्**

घ. डड्

**१२. 'विंशतेः पूरणः' इति विग्रहे किं रूपम् ?**

**क. विंशः**

ख. विंशतिः

ग. विंशती

घ. विंशमः

**१३. षण्णां पूरणः इति विग्रहे किं रूपं साधु—**

क. षट्

ख. षड्

ग. षष्ठमः

**घ. षष्ठः**

**१४. चतुर्णां पूरणः इति विग्रहे किं रूपं साधु—**

क. चतुर्थः

ख. तुर्यः

ग. तुरीयः

घ. सर्वाणि

**१५. 'तृतीयः' इत्यत्र कः प्रत्ययः ?**

क. डट्

**ख. तीय**

ग. यञ्

घ. य

**१६. 'अधीती' इत्यत्र कः प्रत्ययः ?**

क. डट्

**ख. इनिँ**

ग. विनिँ

घ. तीय्

**१७. 'गोमान्' इत्यत्र 'मतुँप्' कस्मिन्नर्थे—**

क. निन्दायाम्

ख. बहुत्वे

ग. प्रशंसायाम्

घ. सम्बन्धे

**१८. असमीचीनं वाक्यं चिनुत—**

क. मत्वर्थप्रत्ययात् पुनः सरूपमत्वर्थप्रत्ययो न भवति।

**ख. यत्र 'असरूपः' मतुँप्-प्रत्ययः भवति तत्रापि पुनः मतुँप् न भवति।**

ग. तदस्यास्त्यस्मिन्निति मतुँप् इत्यत्र अस्तीत्यनेन कालः वर्तमानकालो विवक्षितोऽस्ति।

घ. 'गो + मात्+ सुँ' इत्यत्र अत्वसन्तस्य चाधातोःइत्यनेन दीर्घः।

**१९. तसौ मत्वर्थे इत्यनेन किं विधीयते—**

क. मतुँप्

ख. इनिँ

**ग. भसञ्ज्ञा**

घ. पदसञ्ज्ञा

**२०. शुक्लो गुणोऽस्य अस्तीति विग्रहे किं रूपं साधु ?**

**क. शुक्लः**

ख. शुक्लवान्

ग. शुक्ली

घ. शुक्ला

**२१. 'चूडालः' इत्यत्र कः प्रत्ययः—**

क. आल्

ख. मतुँप्

**ग. लच्**

घ. अँल्

**२२. 'लक्ष्मणः' इत्यत्र कः प्रत्ययः —**

क. ण

ख. अन्

**ग. न**

घ. अण्

**२३. 'प्रशस्ताः केशाः सन्ति अस्य' इति विग्रहे किं रूपं साधु?**

क. केशवः।

ख. केशी।

ग. केशिकः। केशवान्।

**घ. सर्वाणि**

**२४. 'व्रीही' इत्यत्र कः प्रत्ययः?**

क. ई

**ख. इनिँ**

ग. न

घ. अण्

**२५. सुमेलनं करोतु—**

| | | |
|---|---|---|
| क. | अहंयुः | 1.**अत इनिँ-ठनौ** |
| ख. | अर्शसः | 2.**अहंशुभमोर्युस्** |
| ग. | मेधावी | 3.**अर्शआदिभ्योऽच्** |
| घ. | दण्डी | 4.**अस्-माया-मेधा-स्रजो विनिँः** |

क. 2, 4, 3, 1

ख. 2. 3, 1, 4

ग. 3, 4, 1, 2

**घ. 2, 3, 4, 1**

# अथ प्राग्दिशीयाः



१४०. अहं-शुभमोर्युस् १९४६ ।
समर्थानां प्रथमाद्वा (४.१.८२) इत्यधिकार इतो निवृत्तः ।

पञ्चमाध्याये तृतीयः पादः

विभक्तिसंज्ञा

१. प्राग्दिशो विभक्तिः १९४७ ।

प्रकृत्यधिकारः

२. किंसर्वनाम-बहुभ्योऽद्व्यादिभ्यः १९४८ ।

अधिकारोऽयम् । किमः, सर्वनाम्नो, बहुशब्दाच्चेति, प्राग्दिशोऽधिक्रियते ।

३. इदम इश् १९४९ ।
४. एतेतौ रथोः १९५० ।
५. एतदोऽन् १९५१ ।
६. सर्वस्य सोऽन्यतरस्यां दि १९५२ ।

विभक्तिसंज्ञका अव्ययसंज्ञकाश्च तद्धिताः

'पञ्चम्यास्तसिल् ५.३.७' इत आरभ्य 'दिक्शब्देभ्यः ५.३.२७' इत्यन्तं वक्ष्यमाणाः प्रत्ययाः, विभक्तिसंज्ञका अव्ययसंज्ञकाश्च सन्ति ।

७. पञ्चम्यास्तसिल् १९५३ ।
८. तसेश्च १९५५ ।
९. पर्यभिभ्यां च १९५६ ।
१०. सप्तम्यास्त्रल् १९५७ ।
११. इदमो हः १९५८ ।
१२. किमोऽत् १९५९ ।
१३. वा ह च च्छन्दसि १९६१ ।
१४. इतराभ्योऽपि दृश्यन्ते १९६३ ।
१५. सर्वैकान्यकिंयत्तदः - काले दा १९६४ ।
१६. इदमो र्हिल् १९६५ ।
१७. अधुना १९६६ ।
१८. दानीं च १९६७ ।
१९. तदो दा च १९६८ ।
२०. तयोर्दार्हिलौ च च्छन्दसि ३४९९ ।
२१. अनद्यतने - र्हिलन्यतरस्याम् १९६९ ।
२२. सद्यः परुत्परार्यैषमः-परेद्यव्यद्य-पूर्वेद्यु-रन्येद्यु-रन्यतरेद्यु-रितरेद्यु-रपरेद्यु-रधरेद्यु-रुभयेद्यु-रुत्तरेद्युः १९७० ।
२३. प्रकारवचने थाल् १९७१ ।
२४. इदमस्थमुः १९७२ ।
२५. किमश्च १९७३ ।
२६. था हेतौ च च्छन्दसि ३५०० ।

## अव्ययतद्धिताः

दिक्शब्देभ्यः० ५.३.२७ इत आरभ्य 'याप्ये पाशप् ५.३.४७' इत्यतः प्राक् कथिताः प्रत्ययाः 'तसिलादयः प्राक्पाशपः' इत्यनेन अव्ययसंज्ञकाः । एषां विभक्तिसंज्ञा नास्ति ।

२७. दिक्शब्देभ्यः -

# तसिँल्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ विभक्तिसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— प्राग्दिशो विभक्तिः (५,३.१)**

अर्थः— 'दिक्शब्देभ्य..' इत्यतः प्राग् वक्ष्यमाणाः प्रत्यया विभक्तिसञ्ज्ञाः स्युः॥

❖ प्राग्दिशीयाधिकारसूत्रम्—

**सूत्रम्— किं-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः (५,३.२)**

अर्थः—किमः सर्वनाम्नो बहुशब्दाच्चेति(अद्व्यादिभ्यः सर्वनामभ्यः) प्राग्दिशोऽधिक्रियते॥

❖ तसिँल्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पञ्चम्यास्तसिँल् (५,३.७)**

अर्थः— पञ्चम्यन्तेभ्यः किमादिभ्यस् तसिँल् वा स्यात्॥

❖ कु-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— कु तिहोः (७,२.१०४)**

अर्थः— किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। ० कुतः, कस्मात्॥

लौकिकविग्रहः—कस्मात्।
किम् ङसिँ+ तसिँल्
किम् + तस् (किमः कः इति प्राप्ते)
कु+ तस् (तद्धितश्चासर्वविभक्तिः)
कुतः

# अथ सर्वादिगणः



- सूत्रम्- सर्वादीनि सर्वनामानि॥ (१,१.२७)
- सूत्रार्थः- (सर्वाद्यर्थवाचकानि सर्वादिगणे पठितानि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः)।
- **सर्व**[1]=सभी All, **विश्व**[2] = सभी All, **उभ**[3] = दोनों Both, **उभय**[4] = दो अवयव वाला, **डतर**[5] = दो में से एक का निर्धारण, **डतम**[6] = बहुत में से एक का निर्धारण, **अन्य**[7] = दूसरा, **अन्यतर**[8] = दो में से एक, **इतर**[9] = भिन्न, **त्वत्**[10] =भिन्न, **त्व**[11] = भिन्न, **नेम**[12] = आधा, **सम**[13] = सभी All, **सिम**[14] = सभी All, ।
- गणसूत्रम्—पूर्व[15] पर[16] अवर[17] दक्षिण[18] उत्तर[19] अपर[20] अधराणि[21] व्यवस्थायामसंज़ायाम्।
- सूत्रार्थः- (पूर्वादीनि सप्त शब्दानि व्यवस्थायाम्-असंज़ायां च सर्वादिगणे सन्निविष्टानि वेदितव्यानि।)
- गणसूत्रम्—स्वम्[22] अज़ातिधनाख्यायाम्।
- सूत्रार्थः- ('स्वम्' इति शब्दो ज़ातिधनाभ्यां भिन्नार्थे सर्वादिगणे सन्निविष्टं वेदितव्यम्।)
- गणसूत्रम्—अन्तरं[23] बहिर्योगोपसंव्यानयोः।
- सूत्रार्थः- ('अन्तरम्' इति शब्दो बहिर्योग-उपसंव्यानार्थे च सर्वादिगणे सन्निविष्टं वेदितव्यम्।)

त्यद्[24] तद्[25] यद्[26] एतद्[27] इदम्[28] अदस्[29] एक[30] द्वि[31] युष्मद्[32] अस्मद्[33] भवतु[34] किम्[35] ॥

# तसिँल्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ इश्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— इदम इश्॥ (५,३.२)**

अर्थः— प्राग्दिशीये परे। ○ इतः॥

❖ अन्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— अन्[१] (६,४.१६७)**

अर्थः— एतदः (स्थाने 'अन्'इत्यादेशः) प्राग्दिशीये।

○ अनेकाल्त्वात्सर्वादेशः।

○ अतः। अमुतः। यतः। ततः। बहुतः।
अमुष्मात्। यस्मात्। तस्मात्। बहुभ्यः।

○ द्व्यादेस्तु— द्वाभ्याम्॥

❖ तसिँल्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पर्यभिभ्यां च (५,३.९)**

अर्थः— आभ्यां तसिँल् स्यात्।

○ परितः= सर्वत इत्यर्थः। ○ अभितः= उभयत इत्यर्थः॥

लौकिकविग्रहः—अस्मात्।
इदम् ङसिँ+ तसिँल्
इश् + तस्
इ+ तस् (तद्धितश्चासर्वविभक्तिः)
इतः

लौकिकविग्रहः—एतस्मात्।
एतद् ङसिँ+ तसिँल्
एतद् + तस् (त्यदादीनामः प्राप्ते)
अन् + तस् (नलोपः प्रातिपदि..)
अतः

१.चेन्नै संस्करणे 'एतदोऽन्' इत्यविभक्तं सूत्रम्।

# त्रल्-हप्रत्यययोः प्रक्रियार्थनिरूपणम्



❖ त्रल्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— सप्तम्यास्त्रल् (५,३.१०)**

अर्थः— सप्तम्यन्तेभ्यः किमादिभ्यः स्वार्थे 'त्रल्'प्रत्ययो वा स्यात्।

○ कुत्र। यत्र। तत्र। बहुत्र॥

❖ ह-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इदमो हः (५,३.११)**

अर्थः— सप्तम्यन्तेभ्यः इदमः स्वार्थे 'ह'प्रत्ययो वा स्यात्।

○ त्रलोऽपवादः।

○ इह॥

इसीप्रकार—सर्वस्मिन् = सर्वत्र। अन्यस्मिन् = अन्यत्र। एकस्मिन् = एकत्र। उभयस्मिन् = उभयत्र। विश्वस्मिन् = विश्वत्र। एतस्मिन् = अत्र।[1] अमुष्मिन् = अमुत्र।[2] इत्यादि।

लौकिकविग्रहः— कस्मिन्।
किम् ङि + त्रल्
कु + त्र (कु तिहोः)
कुत्र
यस्मिन्— यत्र
तस्मिन्— तत्र
बहुषु— बहुत्र
एतस्मिन्— अत्र (अन्)

लौकिकविग्रहः— अस्मिन्।
इदम् ङि + ह
इश् + ह (इदम् इश्)
इह

लघुसिद्धान्तकौमुद्याम् तद्धितेषु प्राग्दिशीयाः

# अत्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ अत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— किमोऽत् (५,३.१२)**

○ वाग्रहणमपकृष्यते। (वा ह चच्छन्दसि इति सूत्रात्।)

अर्थः— सप्तम्यन्तात् किमोऽत्(प्रत्ययो) वा स्यात्।

○ पक्षे त्रल्॥

❖ क्व-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— क्वाति (७,२.१०५)**

अर्थः—किमः ‘क्व’आदेशः स्याद् अति।

○ क्व।

○ कुत्र॥

लौकिकविग्रहः— कस्मिन्।

किम् ङि+ ह

किम् + अत्

क्व + अ (यस्येति च)

क्व। कुत्र।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्राग्दिशीयाः

# तसिँल्-आदिविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ तसिँल्-आदिविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— इतराभ्योऽपि दृश्यन्ते (५,३.१४)**

**अर्थः—** पञ्चमी-सप्तमीतर-विभक्त्यन्तादपि तसिँलादयो दृश्यन्ते।

- भाष्यवार्तिकम्[१]— दृशिग्रहणाद् भवदादियोग एव।
- स भवान्— ततो भवान्। तत्रभवान्।
- तं भवन्तम्— ततो भवन्तम्। तत्रभवन्तम्।
- एवं दीर्घायुः, देवानाम्प्रियः, आयुष्मान्॥

१.औदीच्यलघुकौमुदीसंस्करणेषु इदं वाक्यं वार्तिकरूपेण नास्ति।

१) स भवान्=ततो भवान्/ तत्रभवान्।
२) तम् भवन्तम् =ततो भवन्तम्/ तत्रभवन्तम् ।
३) तेन भवता =ततो भवता / तत्रभवता ।
४) तस्मै भवते =ततो भवते/ तत्रभवते ।
४) तस्मात् भवतः =ततो भवतः/ तत्रभवतः ।
५) तस्य भवतः =ततो भवतः/ तत्रभवतः ।
६) तस्मिन् भवति = ततो भवति/ तत्रभवति ।

१) सः दीर्घायुः = तत्रदीर्घायुः / ततो दीर्घायुः।
२) सः आयुष्मान् = तत्रायुष्मान् / तत आयुष्मान्।
३) सः देवानां प्रियः = तत्रदेवानां प्रियः / ततो देवानां प्रियः।

# दा-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ दा-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सर्वैकान्यकिंयत्तदः काले दा (५,३.१५)**

अर्थः— सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्॥

❖ स-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— सर्वस्य सोऽन्यतरस्यां दि (५,३.६)**

अर्थः— दादौ प्राग्दिशीये सर्वस्य सो वा स्यात्।

- सर्वस्मिन् काले = सदा। सर्वदा।
- अन्यदा। कदा। यदा। तदा।
- काले किम्? सर्वत्र देशे॥

सप्तम्यन्तेभ्यः कालार्थेभ्यः

- सर्व
- एक
- अन्य
- किम्
- यद्
- तद्

स्वार्थे दा-प्रत्ययः

- एकस्मिन् काले= एकदा।
- अन्यस्मिन् काले= अन्यदा।
- कस्मिन् काले= कदा।
- यस्मिन् काले= यदा।
- तस्मिन् काले= तदा।

लौकिकविग्रहः— सर्वस्मिन् काले।

सर्व ङि+ दा

सर्व + दा

स + दा

सदा। सर्वदा।

# र्हिल्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ र्हिल्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इदमो र्हिल् (५,३.१६)**

**अर्थः—** 'इदम्' प्रातिपदिकात् सप्तम्यन्तात् काल इत्येव स्वार्थे 'र्हिल्'प्रत्ययः स्यात्।

❖ एत-इत्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— एतेतौ र-थोः (५,३.४)**

**अर्थः—** इदम्शब्दस्य 'एत इत्' इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे।

- अस्मिन् काले= एतर्हि।
- काले किम्? इह देशे॥

कालार्थे इदम्
- र्हिल् — एतर्हि
- अधुना — अधुना
- दानीम् — इदानीम्

- रेफादौ प्रत्यये परे— एत
- थकारादौ प्रत्यये परे— इत्

लौकिकविग्रहः— अस्मिन् काले।
इदम् ङि+ र्हिल्
एत + र्हि
एतर्हि

# र्हिल्-प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ र्हिल्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अनद्यतने र्हिलन्यतरस्याम् (५,३.२१)**

अर्थः— अनद्यतनकालवाचिभ्यः किमादिभ्यः स्वार्थे 'र्हिल्'प्रत्ययो वा स्यात्।

○ कर्हि, कदा। यर्हि, यदा। तर्हि, तदा॥

❖ एत-इत्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— एतदः (५,३.५)**

अर्थः— 'एतद्' इत्यस्य 'एत इत्' एतौ स्तौ रेफादौ थादौ च प्राग्दिशीये।

○ एतस्मिन् काले= एतर्हि॥

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्राग्दिशीयाः

# थाल्-थमुँप्रत्यययोः प्रक्रियार्थनिरूपणम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ थाल्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्रकारवचने थाल् (५,३.२३)**

**अर्थः—** प्रकारवृत्तिभ्यः किमादिभ्यः 'थाल्' स्यात् स्वार्थे।

○ तेन प्रकारेण= तथा। ○ यथा॥

❖ थमुँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इदमस्थमुँः (५,३.२४)**

**अर्थः—** प्रकारवृत्तेर् इदमः 'थमुँः'प्रत्ययः स्यात् स्वार्थे। थालोऽपवादः।

**वार्तिकम्—** एतदोऽपि वाच्यः।

○ अनेन एतेन वा प्रकारेण= इत्थम्॥

❖ थमुँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— किमश्च (५,३.२५)**

**अर्थः—** प्रकारवृत्तेर् किमः स्वार्थे 'थमुँः'प्रत्ययः स्यात्। थालोऽपवादः।

○ केन प्रकारेण= कथम्॥

॥ इति प्राग्दिशीयाः॥ १४॥

* सामान्यस्य भेदको विशेषोऽत्र प्रकारः, न तु सादृश्यम्। यथा सामान्यतो ज्ञातं देवदत्तं प्रति अवस्थाविशेषजिज्ञासायां केन विशेषधर्मेण युक्तो देवदत्त इत्याशयेन 'कथं देवदत्तः?' इति केनचित्पृष्टः कश्चिद् भवज्ज्ञातावस्थाविशेषविशिष्ट एव देवदत्त इत्याशयेनोत्तरयति—'तथा देवदत्तः' इति। तेन प्रकारेणेति मूलोक्तविग्रहे 'विशिष्टः' इति शेषो बोध्यः। एवमग्रेऽपि॥

**तेन प्रकारेण विशिष्टः**
तद् टा+ थाल्
तद् + था
त + था
तथा

**अनेन एतेन वा प्रकारेण विशिष्टः**
इदम् टा+ थमुँ
इत् + थम् (एतेतौ रथोः)
इत्थम्

एतद् टा+ थमुँ
इत् + थम् (एतदः) (जश्त्व-चर्त्वे)

किम् टा+ थमुँ
क+ थम् (किमः कः)

# अथ प्रागिवीयाः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

## अव्ययतद्धिताः

दिक्शब्देभ्यः० ५.३.२७ इत आरभ्य 'याप्ये पाशप् ५.३.४७' इत्यतः प्राक् कथिताः प्रत्ययाः 'तसिलादयः प्राक्पाशपः' इत्यनेन अव्ययसंज्ञकाः। एषां विभक्तिसंज्ञा नास्ति।

२७. दिक्शब्देभ्यः – सप्तमीपञ्चमी–प्रथमाभ्यो – दिग्देशकालेष्वस्तातिः १९७४।
२८. दक्षिणोत्तराभ्यामतसुच् १९७८।
२९. विभाषा परावराभ्याम् १९७९।
३०. अञ्चेर्लुक् १९८०।
३१. उपर्युपरिष्टात् १९८१।
३२. पश्चात् १९८२।
३३. पश्च पश्चा च च्छन्दसि ३५०१।
३४. उत्तराधर–दक्षिणादातिः १९८३।
३५. एनबन्यतरस्या– मदूरेऽपञ्चम्याः १९८४।
३६. दक्षिणादाच् १९८५।
३७. आहि च दूरे १९८६।
३८. उत्तराच्च १९८७।
३९. पूर्वाधरावराणामसि– पुरधवश्चैषाम् १९७५।
४०. अस्ताति च १९७६।
४१. विभाषावरस्य १९७७।
४२. संख्याया विधार्थे धा १९८८।
४३. अधिकरणविचाले च १९८९।
४४. एकाद्धो – ध्यमुञन्यतरस्याम् १९९०।
४५. द्वित्र्योश्च धमुञ् १९९१।
४६. एधाच्च १९९२।
४७. याप्ये पाशप् १९९३।

इत्यव्ययतद्धिताः

४८. पूरणाद् भागे तीयादन् १९९४।
४९. प्रागेकादशभ्योऽछन्दसि १९९५।
५०. षष्ठाष्टमाभ्यां ञ च १९९६।
५१. मानपश्वङ्गयोः – कन्लुकौ च १९९७।
५२. एकादाकिनिच्चासहाये १९९८।
५३. भूतपूर्वे चरट् १९९९।
५४. षष्ठ्या रूप्य च २०००।

## आतिशायिकप्रकरणम्

५५. अतिशायने तमबिष्ठनौ २००१।
५६. तिङश्च २००२।

'तिङश्च' इत्यनुवर्तते ५.३.९५ इति यावद्। ५८–६५। ६८–७० सूत्राणि वर्जयित्वा।

५७. द्विवचनविभज्योपपदे – तरबीयसुनौ २००५।
५८. अजादी गुणवचनादेव २००६।
५९. तुश्छन्दसि २००७।
६०. प्रशस्यस्य श्रः २००९।
६१. ज्य च २०११।
६२. वृद्धस्य च २०१३।
६३. अन्तिकबाढयोर्नेदसाधौ २०१४।
६४. युवाल्पयोः कनन्यतरस्याम् २०१९।
६५. विन्मतोर्लुक् २०२०।

## स्वार्थिकप्रत्ययाः

६६. प्रशंसायां रूपप् २०२१।

६७. ईषदसमाप्तौ – कल्पब्देश्यदेशीयरः २०२२।

६८. विभाषा सुपो – बहुच्पुरस्तात्तु २०२३।

६९. प्रकारवचने जातीयर् २०२४।

## अथ काधिकारः

७०. प्रागिवात्कः २०२५।

'इवे प्रतिकृतौ ५.३.९६' इति वक्ष्यति। प्रागेतस्मादिवसंशब्दनाद् यदित ऊर्ध्वमनुक्रमिष्यते कप्रत्ययस्तेष्वधिकृतो वेदितव्यः।

७१. अव्ययसर्वनाम्ना–मकच् – प्राक्टेः २०२६।

७२. कस्य च दः २०२७।

७३. अज्ञाते २०२८।

७४. कुत्सिते २०२९।

७५. संज्ञायां कन् २०३०।

७६. अनुकम्पायाम् २०३१।

७७. नीतौ च तद्युक्तात् २०३२।

७८. बह्वचो मनुष्यनाम्नष्ठज्वा २०३३।

७९. घनिलचौ च २०३४।

८०. प्राचा–मुपादे–रडज्वुचौ च २०३६।

८१. जातिनाम्नः कन् २०३७।

८२. अजिनान्तस्योत्तरपद – लोपश्च २०३९।

८३. ठाजादा–वूर्ध्वं द्वितीयादचः २०३५।

८४. शेवल–सुपरिविशाल – वरुणार्यमादीनां तृतीयात् २०३८।

८५. अल्पे २०४०।

८६. ह्रस्वे २०४१।

८७. संज्ञायां कन् २०४२।

८८. कुटीशमी–शुण्डाभ्यो रः २०४३।

८९. कुत्वा डुपच् २०४४।

९०. कासू–गोणीभ्यां ष्टरच् २०४५।

९१. वत्सोक्षाश्वर्षभेभ्यश्च – तनुत्वे २०४६।

९२. किंयत्तदोर्निर्धारणे द्वयोरेकस्य – डतरच् २०४७।

९३. वा बहूनां जातिपरिप्रश्ने डतमच् २०४८।

९४. एकाच्च प्राचाम् २०४९।

९५. अवक्षेपणे कन् २०५०।

काधिकारो निवृत्तः।

९६. इवे प्रतिकृतौ २०५१।

इत 'इवे' इति अनुवर्तति ५.३.१११ इति यावत्।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्राग्विवीयाः

# ‘तमप्-इष्ठन्’प्रत्यययोः प्रक्रियार्थनिरूपणम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ ‘तमप्-इष्ठन्’प्रत्यययोः विधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— अतिशायने तमबिष्ठनौ (५,३.५५)**

**अर्थः—** अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः।

- अयमेषामतिशयेनाढ्यः= आढ्यतमः।
- लघुतमः, लघिष्ठः॥

| आढ्य सुँ+ तमप् | लघु सुँ+ इष्ठन् |
|---|---|
| आढ्य + तम | लघु + इष्ठ(टेः— टिलोपः) |
| आढ्यतमः/मा/म् | लघिष्ठः/ठा/म् |

✓ अतिशयः= प्रकर्षः/उत्कर्षः/अधिकता/श्रेष्ठता।

❖ अयम् आढ्यः, अयम् आढ्यः,अयम् आढ्यः, अयम् एषाम्/एषु अतिशयेन आढ्यः।

❖ सर्वे इमे आढ्याः, अयमेषाम् अतिशयेन आढ्यः।

❖ ‘अजादी गुणवचनादेव’ इति नियमाद् ‘इष्ठन्-ईयसुँन्’ प्रत्ययौ गुणवाचकेभ्य एव भवन्ति। तेन आढ्यशब्दस्य लघु-गुरु इत्यादिवत् गुणवाचकत्वाभावाद् उक्तप्रत्ययौ न।



small
लघुः



smaller
लघुतरः/ लघीयान्



smallest
लघुतमः/ लघिष्ठः

| # | Name | Net worth | Country |
|---|---|---|---|
| 1 | Elon Musk | $273.5 B | United States |
| 2 | Gautam Adani | $155.3 B | India |
| 3 | Bernard Arnault | $155.2 B | France |
| 4 | Jeff Bezos | $149.7 B | United States |
| 5 | Bill Gates | $105.3 B | United States |
| 6 | Larry Ellison | $98.3 B | United States |
| 7 | Warren Buffett | $96.5 B | United States |
| 8 | Mukesh Ambani | $92.3 B | India |
| 9 | Larry Page | $89.0 B | United States |
| 10 | Sergey Brin | $85.4 B | United States |

World Richest Man 2022: दुनिया के 10 सबसे अमीर आदमी

# ‘तमप्-आमुँ’प्रत्यययोः प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ ‘तमप्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तिङश्च (५,३.५६)**

अर्थः— तिङन्तादतिशये द्योत्ये ‘तमप्’ स्यात्॥

❖ घ-सञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— तरप्-तमपौ घः (१,१.२२)**

अर्थः— एतौ घसञ्ज्ञौ स्तः॥

❖ आमुँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— किमेत्तिङव्यय-घादाम्वद्रव्यप्रकर्षे (५,४.११)**

अर्थः— किम एदन्तात्तिङोऽव्ययाच्च यो घः= घसञ्ज्ञकः तदन्ताद् ‘आमुः’ प्रत्ययः स्यात्, न तु द्रव्यप्रकर्षे।

- किम्— किन्तमाम्।
- एदन्तम्— प्राह्णेतमाम्।
- तिङन्तः— पचतितमाम्।
- अव्ययम्— उच्चैस्तमाम्।
- द्रव्यप्रकर्षे तु— उच्चैस्तमस्तरुः॥

इदमेषामतिशयेन किम् (कुत्सितम्)।
किम् सुँ+ तमप्
किम् + तम
किंतम+ आमुँ (यस्येति च)
किंतम्+ आम् (तद्धितश्चासर्वविभक्तिः)
किन्तमाम्, किंतमाम्

अतिशयिते प्राह्णे= प्राह्णेतमाम्।

आसाम् इयम् अतिशयेन पचति।
पचति + तम
पचतितम+ आमुँ
पचतितमाम्

अतिशयितेन उच्चैः (क्रिया)= उच्चैस्तमाम्।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्रागिवीयाः

# ‘तरप्-ईयसुँन्’प्रत्यययोः प्रक्रियार्थनिरूपणम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ ‘तरप्-ईयसुँन्’प्रत्यययोः विधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— द्विवचनविभज्योपपदे तरबीयसुँनौ (५,३.५७)**

**अर्थः—** द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः।

द्व्यर्थवाचके शब्दोपपदे तथा विभक्तव्यस्य पदे उपपदे= ‘पञ्चमी विभक्तेः’ इति सूत्रविहिते पञ्चम्यन्ते उपपदे अतिशायनविशिष्टार्थे सुबन्तात् तिङन्ताच्च तद्धितसञ्ज्ञकौ ‘तरप्-ईयसुँन्’ एतौ प्रत्ययौ स्तः।

- पूर्वयोरपवादः= ‘अतिशायने तमबिष्ठनौ, तिङश्च’ इत्यनयोः सूत्रयोः अपवादः।
- द्विवचनोपपदस्योदाहरणम्— अयमनयोरतिशयेन लघुः= लघुतरो, लघीयान्।
- विभज्योपपदस्योदाहरणम्— उदीच्याः प्राच्येभ्यः= पटुतराः, पटीयांसः॥

अयमपि लघुः, अयमपि लघुः, अयमनयोः अतिशयेन लघुः।

- लघु सुँ+ तरप्

लघु + तर= लघुतरः।

- लघु सुँ+ ईयसुँन्

लघ् + ईयस् (टेः)
लघीयन् स्+ सुँ (उगिदचां....)
लघीयान् स्+ स् (सान्तमहतः..)
**लघीयान्**

- ✓ द्विवचनशब्देनात्र व्याकरणशास्त्रे प्रसिद्धानाम् ‘औ-२,भ्याम्-३,ओस्-२’ विभक्तीनां ग्रहणं नास्ति। उच्यते इति वचनम्। द्वयोरर्थयोर्वचनं द्विवचनम्। येन पदेन अर्थद्वयमुच्यते तद् द्विचनम् इति तात्पर्यम्।
- ✓ विभज्यम्=विभक्तव्यम्= पृथक्करणीयम् (जो अलग किया जाए।)
- ✓ उपोच्चरितं= समीपोच्चरितं पदम्=उपपदम्, न तु पारिभाषिकं तत्रोपपदं सप्तमीस्थम्।

पटु + ईयस् (टेः)
पटीयन् स्+ जस् (उगिदचां....)
पटीयान् स्+ अस् (सान्तमहतः..)
**पटीयांसः**

# प्रशस्यशब्दाद् इष्ठन्-ईयसुँनोः प्रक्रिया



{मूलपाठः}

❖ 'श्र'आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— प्रशस्यस्य श्रः (५,३.६०)**

अर्थः— अस्य श्रादेशः स्यादजाद्योः= इष्ठन्-ईयसुँनोः परतः॥

❖ प्रकृतिभावविधायकं विधिसूत्रम्—

**सूत्रम्— प्रकृत्यैकाच् (६,४.१६३)**

अर्थः— इष्ठादिष्वेकाच् प्रकृत्या स्यात्।

○ श्रेष्ठः। श्रेयान्॥

❖ 'ज्य'आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— ज्य च (५,३.६१)**

अर्थः— प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ○ ज्येष्ठः॥

❖ 'आत्'आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— ज्यादादीयसः (६,४.१६०)**

अर्थः— ज्यात् परस्य ईयस आकारादेशः स्यात्। आदेः परस्य।

○ ज्यायान्॥



अयम् एषाम्/एषु अतिशयेन प्रशस्यः

प्रशस्य सुँ+ इष्ठन् (अतिशायने तमबिष्ठनौ)

श्र/ज्य+ इष्ठ ('टेः' इत्यनेन टिलोपे प्राप्ते)

श्रेष्ठः, ज्येष्ठः (आद्गुणः)

अयम् अनयोः अतिशयेन प्रशस्यः

प्रशस्य सुँ+ ईयसुँन् (द्विवचनविभज्य..)

श्र/ज्य+ ईयस् ('टेः' इत्यनेन टिलोपे प्राप्ते)

ज्य+ आयस्

श्रेयस् / ज्यायस्

श्रेयन् स् + सुँ (उगिदचां....)

श्रेयान् स् + स् (सान्तमहतः..)

श्रेयान्, ज्यायान् (प्रशस्यतरः)

# बहुशब्दाद् इष्ठन्-ईयसुँनोः प्रक्रिया



{मूलपाठः}

❖ अनेककार्यार्थं विधिसूत्रम्—

**सूत्रम्— बहोर्लोपो भू च बहोः (६,४.१५८)**

अर्थः— बहोः परयोर् इमेयसोर्लोपः स्याद्, बहोश्च भूरादेशः।

○ भूमा। भूयान्॥

❖ अनेककार्यार्थं विधिसूत्रम्—

**सूत्रम्— इष्ठस्य यिट् च (६,४.१५९)**

अर्थः— बहोः परस्य इष्ठस्य लोपः स्याद्, यिडागमश्च।

○ भूयिष्ठः॥

बहोर्भावः

बहु ङस् + इमनिँच्

भू+ मन् (बहोर्लोपो भू च बहोः। आदेः परस्य)

भूमन्+ सुँ (तद्धितश्चासर्वविभक्तिः)

भूमा

अयम् अनयोः अतिशयेन बहुः

भू सुँ+ ईयसुँन् (द्विवचनविभज्य..)

भू+ यस् (बहोर्लोपो भू च बहोः। आदेः परस्य)

भूयान्

अयम् एषाम् अतिशयेन बहुः

बहु+ इष्ठ (अतिशायने तमबिष्ठनौ)

भू+ ष्ठ

भू+ यिट् ष्ठ

भूयिष्ठः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्राग्िवीयाः

# विन्मतोर्लुक्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ लुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— विन्मतोर्लुक् (५,३.६५)**

**अर्थः— विनो मतुँपश्च लुक् स्याद् इष्ठेयसोः।**

- विनिँ— अतिशयेन स्रग्वी= स्रजिष्ठः। स्रजीयान्।
- मतुँप्— अतिशयेन त्वग्वान्= त्वचिष्ठः। त्वचीयान्॥

मतिमत्— मतिष्ठः, मतीयान्।
धनवत्— धनिष्ठः, धनीयान्।
बलवत्— बलिष्ठः, बलीयान्।
मेधाविन्— मेधिष्ठः, मेधीयान्।

सर्वे इमे स्रग्विणः
अयम् एषाम् अतिशयेन स्रग्वी
स्रज् सुँ+ विन् (अस्मायामेधास्रजो विनिँ)
स्रग्विन्+ इष्ठ/ईयस् (अतिशायने...। द्विवचन..)
स्रज्+ इष्ठ (निमित्तापाये नैमित्तिकस्याप्यपायः)
स्रजिष्ठः, स्रजीयान्

सर्वे इमे त्वग्वन्तः
अयम् एषाम् अतिशयेन त्वग्वान्
त्वच् सुँ+ मतुँप् (तदस्यास्त्यस्मिन्निति मतुँप्)
त्वग्वान्+इष्ठ/ईयस् (अतिशायने...। द्विवचन..)
त्वच् + इष्ठ (निमित्तापाये नैमित्तिकस्याप्यपायः)
त्वचिष्ठः। त्वचीयान्

**(१) स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः (६.४.१५६) ॥**

**अर्थः**—इष्ठन्, इमनिँच् या ईयसुँन् प्रत्ययों के परे रहते स्थूल, दूर, युवन्, ह्रस्व, क्षिप्र और क्षुद्र इन छः शब्दों के यण् से ले कर परले भाग का लोप हो जाता है किञ्च यण् से पूर्व इकार उकार के स्थान पर गुण भी हो जाता है। यथा—

स्थूल (मोटा)—स्थो + इष्ठन् = स्थविष्ठः। स्थवीयान्।
दूर (दूर)—दो + इष्ठन् = दविष्ठः। दवीयान्।
युवन् (जवान)—यो + इष्ठन् = यविष्ठः। यवीयान्।
ह्रस्व (छोटा)—ह्रस् + इष्ठन् = ह्रसिष्ठः। ह्रसीयान्।
क्षिप्र (शीघ्र)—क्षेप् + इष्ठन् = क्षेपिष्ठः। क्षेपीयान्।
क्षुद्र (छोटा)—क्षोद् + इष्ठन् = क्षोदिष्ठः। क्षोदीयान्।[1]

(२) युवाल्पयोः कनन्यतरस्याम् (५.३.६४) ॥

अर्थः—इष्ठन् या ईयसुंन् प्रत्यय के परे रहते युवन् और अल्प शब्दों के स्थान पर विकल्प से कन् सर्वादेश होता है। यथा—

युवन् (जवान)—कन् + इष्ठन् = कनिष्ठः। कनीयान्।
पक्षे—यविष्ठः। यवीयान्। (स्थूलदूरयुव०)

अल्प (थोड़ा)—कन् + इष्ठन् = कनिष्ठः। कनीयान्।
पक्षे—अल्पिष्ठः। अल्पीयान्।

(३) अन्तिक-बाढयोर्नेदसाधौ (५.३.६३) ॥

अर्थः—इष्ठन् या ईयसुंन् प्रत्यय के परे रहते अन्तिक को नेद तथा बाढ को साध आदेश होता है। यथा—

अन्तिक (निकट)—नेद + इष्ठन् = नेदिष्ठः। नेदीयान्।
बाढ (दृढ़, अच्छा)—साध + इष्ठन् = साधिष्ठः। साधीयान्।

**(४) प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रब-द्राघि-वृन्दाः (६.४.१५७) ॥**

**अर्थः**— इष्ठन्, इमनिँच् या ईयसुँन् प्रत्ययों के परे रहते प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ और वृन्दारक इन दस शब्दों के स्थान पर क्रमशः प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि और वृन्द ये दस आदेश हो जाते हैं।[२]

प्रिय (प्यारा)—प्र+इष्ठ=प्रेष्ठः। प्रेयान्।
स्थिर (स्थायी)—स्थ+इष्ठ=स्थेष्ठः। स्थेयान्।
स्फिर (बहुत)—स्फ+इष्ठ=स्फेष्ठः। स्फेयान्।
उरु (विशाल)—वर्+इष्ठ=वरिष्ठः। वरीयान्
बहुल (बहुत)—बंहि+इष्ठ=बंहिष्ठः। बंहीयान्।
गुरु (भारी)—गर्+इष्ठ=गरिष्ठः। गरीयान्।
वृद्ध (बूढ़ा)—वर्षि+इष्ठ=वर्षिष्ठः। वर्षीयान्।
तृप्र (सन्तुष्ट)—त्रप्=इष्ठ=त्रपिष्ठः। त्रपीयान्।
दीर्घ (लम्बा)=द्राघि+इष्ठ=द्राघिष्ठः। द्राघीयान्।
वृन्दारक (सुन्दर)[१]—वृन्द+इष्ठ=वृन्दिष्ठः। वृन्दीयान्

(६) तुरिष्ठेमेयःसु (६.४.१५४) ॥

**अर्थः**—इष्ठन्, इमनिँच् या ईयसुँन् प्रत्ययों के परे रहते 'तृ' का लोप हो जाता है। यहां सम्पूर्ण 'तृ' का ही लोप होता है, केवल ऋकार का नहीं, वह तो टेः (११५७) द्वारा सिद्ध था ही। उदाहरण यथा—

कर्तृ (करने वाला)—कर्+इष्ठ=करिष्ठः। करीयान्।
विजेतृ (जीतने वाला)—विजे+इष्ठ=विजयिष्ठः। विजयीयान्।
स्तोतृ (स्तोता)—स्तो+इष्ठ=स्तविष्ठः। स्तवीयान्।[२]

(५) र ऋतो हलादेर्लघोः (११५६) ॥

अर्थः—इष्ठन्, इमनिँच् या ईयसुँन् प्रत्ययों के परे रहते हलादि लघु ऋकार को 'र' आदेश हो जाता है। इमनिँच् में उदाहरण इसी सूत्र पर पीछे दिये जा चुके हैं। इष्ठन् और ईयसुँन् में उदाहरण यथा—

पृथु (विशाल, चौड़ा)—प्रथु + इष्ठन् = प्रथिष्ठः। प्रथीयान्।
मृदु (कोमल)—म्रदु + इष्ठन् = म्रदिष्ठः। म्रदीयान्।
भृश (अधिक)—भ्रश + इष्ठन् = भ्रशिष्ठः। भ्रशीयान्।
कृश (कमज़ोर)—क्रश + इष्ठन् = क्रशिष्ठः। क्रशीयान्।
दृढ (मजबूत)—द्रढ + इष्ठन् = द्रढिष्ठः। द्रढीयान्।
परिवृढ (प्रधान, स्वामी)—परिव्रढ + इष्ठन् = परिव्रढिष्ठः। परिव्रढीयान्।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु प्रागिवीयाः

# अतिशायनिके प्रकरणे 'इष्ठन्-ईयसुनोः शब्दसूची

संस्कृतसारः

| शब्द Positive | दो में उत्कृष्ट Comparative | सब में उत्कृष्ट Superlative |
|---|---|---|
| १. पटु (चतुर) | पटीयान् | पटिष्ठः |
| २. लघु (छोटा) | लघीयान् | लघिष्ठः |
| ३. प्रशस्य (प्रशंसनीय) | श्रेयान्, ज्यायान् | श्रेष्ठः, ज्येष्ठः |
| ४. महत् (बड़ा) | महीयान् | महिष्ठः |
| ५. बहु (बहुत) | भूयान् | भूयिष्ठः |
| ६. स्रग्विन् (मालावाला) | स्रजीयान् | स्रजिष्ठः |
| ७. त्वग्वत् (छालवाला) | त्वचीयान् | त्वचिष्ठः |
| ८. स्थूल (मोटा) | स्थवीयान् | स्थविष्ठः |
| ९. दूर (दूर) | दवीयान् | दविष्ठः |
| १०. युवन् (जवान) | कनीयान्, यवीयान् | कनिष्ठः, यविष्ठः |
| ११. ह्रस्व (छोटा) | ह्रसीयान् | ह्रसिष्ठः |
| १२. क्षिप्र (शीघ्र) | क्षेपीयान् | क्षेपिष्ठः |
| १३. क्षुद्र (तुच्छ) | क्षोदीयान् | क्षोदिष्ठः |
| १४. अल्प (थोड़ा) | कनीयान्, अल्पीयान् | कनिष्ठः, अल्पिष्ठः |
| १५. अन्तिक (समीप) | नेदीयान् | नेदिष्ठः |
| १६. बाढ (दृढ़, अच्छा) | साधीयान् | साधिष्ठः |
| १७. प्रिय (प्यारा) | प्रेयान् | प्रेष्ठः |
| १८. स्थिर (स्थिर) | स्थेयान् | स्थेष्ठः |

| शब्द Positive | दो में उत्कृष्ट Comparative | सब में उत्कृष्ट Superlative |
|---|---|---|
| १८. स्थिर (स्थिर) | स्थेयान् | स्थेष्ठः |
| १९. स्फिर (बहुत) | स्फेयान् | स्फेष्ठः |
| २०. उरु (विशाल) | वरीयान् | वरिष्ठः |
| २१. बहुल (बहुत) | बंहीयान् | बंहिष्ठः |
| २२. गुरु (बड़ा) | गरीयान् | गरिष्ठः |
| २३. वृद्ध (आयु में बड़ा) | ज्यायान्, वर्षीयान् | ज्येष्ठः, वर्षिष्ठः |
| २४. तृप्र (सन्तुष्ट) | त्रपीयान् | त्रपिष्ठः |
| २५. दीर्घ (लम्बा) | द्राघीयान् | द्राघिष्ठः |
| २६. वृन्दारक (सुन्दर) | वृन्दीयान् | वृन्दिष्ठः |
| २७. पृथु (विशाल, चौड़ा) | प्रथीयान् | प्रथिष्ठः |
| २८. मृदु (कोमल) | म्रदीयान् | म्रदिष्ठः |
| २९. भृश (अधिक) | भ्रशीयान् | भ्रशिष्ठः |
| ३०. कृश (पतला, कमजोर) | क्रशीयान् | क्रशिष्ठः |
| ३१. दृढ (मज़बूत) | द्रढीयान् | द्रढिष्ठः |
| ३२. परिवृढ (स्वामी, प्रधान) | परिव्रढीयान् | परिव्रढिष्ठः |
| ३३. तनु (पतला) | तनीयान् | तनिष्ठः |
| ३४. साधु (ठीक, युक्त) | साधीयान् | साधिष्ठः |
| ३५. कर्तृ (करने वाला) | करीयान् | करिष्ठः |
| ३६. अणु (अणु) | अणीयान् | अणिष्ठः |

# श्रेष्ठः/श्रेष्ठतमः ?



- आतिशायनिकप्रत्ययान्ताद् आतिशायनिको न, अनभिधानात् । 'श्रेष्ठतमाय कर्मणे' इत्यादिकं तु छान्दसत्वात् स्वार्थे साधु । (लघुशब्देन्दुशेखरे)
- यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपर आतिशायनिकः प्रत्ययो भवत्येव । देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे । युधिष्ठिरः श्रेष्ठतमः कुरूणामिति । (काशिका ५.३.५५)

# किञ्चित् न्यूनतार्थे कल्पप्-देश्य-देशीयर्-बहुच्-प्रत्ययाः



❖ कल्पप्-देश्य-देशीयर्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— ईषदसमाप्तौ कल्पब्देश्यदेशीयरः (५,३.६७)**

अर्थः— ईषद् असमाप्तौ= किञ्चित् न्यूनताविशिष्टेऽर्थे विद्यमानात् सुँबन्तात् तिङन्ताच्च स्वार्थे 'कल्पप्-देश्य-देशीयर्' एते प्रत्ययाः स्युः।

- ईषदूनो विद्वान्= विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः।
- पचतिकल्पम्॥ (पचतिदेश्यम्, पचतिदेशीयम्।)

❖ बहुच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— विभाषा सुँपो बहुच् पुरस्तात्तु (५,३.६८)**

अर्थः— ईषदसमाप्तिविशिष्टेऽर्थे सुँबन्ताद् बहुज्वा स्यात्, स च प्रागेव, न तु परतः। (सूत्रे तुशब्दः एवार्थे वर्तते।)

- ईषदूनः पटुर्= बहुपटुः, पटुकल्पः। (पटुदेश्यः, पटुदेशीयः।)
- सुपः किम्? जयतिकल्पम्[1]॥

विद्वस् सुँ + कल्पप्/देश्य/देशीयर्
विद्वद् + कल्प/देश्य/देशीय
(वसुँ-स्रंसुँ-ध्वंस्वनडुहां दः)
विद्वत् + कल्प (खरि च)
विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः।

ईषदूनं पचति
पचति+ कल्पप्/देश्य/देशीयर्
पचतिकल्पम्,पचतिदेश्यम्, पचतिदेशीयम्।

बहुच्+पटु सुँ (अर्थवदधातुरप्रत्ययः प्रातिपदिकम्)
बहु+पटु
बहुपटुः
स्यादीषदसमाप्तौ तु बहुच् प्रकृतिलिङ्गता।(म.भा)

[1] भैमीव्याख्यायाम्— यजतिकल्पम्। चेन्नैसंस्करणे— पचतिकल्पम्

# क-अकँच्-प्रत्ययौ



{मूलपाठः}

❖ 'क'इत्यस्याधिकारसूत्रम्—

**सूत्रम्— प्रगिवात्कः (५,३.७०)**

अर्थः— 'इवे प्रतिकृता'वित्यतः प्राक् काधिकारः॥

❖ अकँच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अव्ययसर्वनाम्नामकँच् प्राक् टेः (५,३.७१)**

- कापवादः। 'तिङश्चे'त्यनुवर्तते।

अर्थः— अव्ययानां सर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेषु 'अकँच्'प्रत्ययो भवति स च प्राक्टेः, न तु परतः॥

❖ कादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अज्ञाते (५,३.७३)**

अर्थः— अज्ञातत्व-विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च यथाविहितं प्रत्ययः स्यात्॥

- कस्यायमश्वः= अश्वकः।
- उच्चकैः। नीचकैः।
- सर्वके।

अज्ञातमुच्चैः

उच्चैस्

उच्च् + अकँच्+ ऐस्

उच्च् + अक् ऐस्

उच्चकैः

अज्ञाताः सर्वे

सर्व जस्

सर्व्+ अकँच्+ अ

सर्वके

# क-अकँच्-प्रत्ययौ



भाष्यवार्तिकम्— ओकार-सकार-भकारादौ सुँपि सर्वनाम्नष्टेः प्रागकँच्, अन्यत्र सुबन्तस्य।[१]

- युष्मकाभिः।
- युवकयोः।
- (युष्मकासु)।
- अन्यत्र सुबन्तेषु— त्वयका॥ इत्यादीनि।

अज्ञातेन त्वया
त्वय्+ अक्+ आ
त्वयका

❖ कादि-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— कुत्सिते (५,३.७४)

अर्थः— निन्दा-विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च यथाविहितं प्रत्ययः स्यात्॥

- कुत्सितोऽश्वः= अश्वकः॥

{मूलपाठः}

अज्ञातैर्युष्माभिः
युष्मद् भिस्
युष्म् + अकँच्+ अद् भिस्
युष्मकद्+ भिस्
युष्मक आ+ भिस् (युष्मदस्मदोरनादेशे)
युष्मकाभिः।

अज्ञातयोर्युवयोः
युष्मद् ओस्
युष्म् + अकँच्+ अद् ओस्
युष्मकद्+ ओस्
युवकय् + ओस् (युवावौ द्विवचने, योऽचि)
युवकयोः।

तिङन्तोदाहरणम्— पचतकि

१. इदं वार्तिकं सर्वत्र लघुकौमुदीसंस्करणेषु न दृश्यते।

# डतरच्-डतमच्-प्रत्ययौ



❖ डतरच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् (५,३.९२)**

अर्थः— द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किम्-यद्-तद् इत्येतेभ्यः प्रातिपदिकेभ्यो 'डतरच्' प्रत्ययः वा स्यात्, स च तद्धितः।

- अनयोः कतरो (कः) वैष्णवः।
- यतरः। ततरः॥

❖ डतमच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वा बहूनां जातिपरिप्रश्ने डतमच् (५,३.९३)**

- 'जातिपरिप्रश्न' इति प्रत्याख्यातमाकरे।

अर्थः— बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात्।

- कतमो (कः) भवतां कठः।
- यतमः। ततमः।
- वा-ग्रहणम् अकँजर्थम्— यकः। सकः॥

॥ इति प्रागिवीयाः॥

{मूलपाठः}

किम्+ डतरच्
किम्+ अतर
क्+ अतर (टेः)
कतरः, कः

अनयोः यतरः/यः वैष्णवः
यद्+ अतर
य्+ अतर (टेः)
यतरः, यः

अनयोः ततरः/सः वैष्णवः
तद्+ अतर
त्+ अतर (टेः)
ततरः, सः

किम्+ डतमच्
किम्+ अतम
क्+ अतम (टेः)
कतमः, कः

यतमः/यः भवतां वैष्णवः
यद्+ अतम
य्+ अतम (टेः)
यतमः, यः, यकः

ततमः/ सः वैष्णवः
तद्+ अतम
त्+ अतम (टेः)
ततमः, सः, सकः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु स्वार्थिकाः

# ‘कन्’प्रत्ययस्य प्रक्रियार्थनिरूपणम्

❖ कन्-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— इवे प्रतिकृतौ (५,३.९६)**

**अर्थः—** इवार्थे= सदृशे वर्तमानात् प्रातिपदिकात् कन् स्यात्, यद् उपमेयं सा प्रतिकृतिः=मूर्तिः चेत्।

- अश्व इव प्रतिकृतिरश्वकः।

❖ अश्वः— उपमानम्।
❖ प्रतिकृतिः— उपमेयः।

**काशिकाभिमतं वार्तिकम्—** सर्वप्रातिपदिकेभ्यः स्वार्थे कन्।

- अश्व एव= अश्वकः॥

❖ उष्ट्रकः। गर्दभकः।



रामं सीतां लक्ष्मणं जीविकार्थे
विक्रीणीते यो नरस्तश्च धिग् धिक्।
अस्मिन् पद्ये योऽपशब्दं न वेत्ति
व्यर्थप्रज्ञं पण्डितं तञ्च धिग् धिक्॥

**सूत्रम्— जीविकार्थे चापण्ये।**

**अर्थः—** यदि कश्चन प्रतिकृतिः जीविकार्थे प्रयुज्यते किन्तु विक्रयणार्थं नास्ति तर्हि तस्मात् प्रातिपदिकात् स्वार्थे विहितस्य कन्-प्रत्ययस्य लुप् स्यात्।



# ‘मयट्’प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ मयट्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तत्प्रकृतवचने मयट् (५,४.२१)**

- प्राचुर्येण= बाहुल्येन सम्पूर्णया प्रस्तुतं= प्रकृतम् (प्रारब्धम् आरम्भविषयीकृतम्), तस्य वचनं= प्रतिपादनम्/कथनम्।
- भावे अधिकरणे वा ल्युट्। (उच्यते इति वचनम्, उच्यतेऽस्मिन्निति वचनम्।)

**अर्थः—** १. प्राचुर्यबोधकात् प्रथमान्तात् प्राचुर्ये द्योत्ये मयट् स्यात्।
२. प्राचुर्यबोधकात् प्रथमान्तात् प्रचुराधिकरणे द्योत्ये मयट् स्यात्।

- आद्ये— प्रकृतम् अन्नम्= अन्नमयम् (अधिकता से विद्यमान अन्न)। अपूपमयम्। (प्रकृताः= प्राचुर्येण अपूपाः)
- द्वितीये तु— अन्नमयो यज्ञः (प्रकृतम्( प्राचुर्येण विद्यमानम् अन्नं यस्मिन्)। अपूपमयं पर्व॥

प्रथमार्थे— प्राचुर्यविशिष्टवस्तोः बोधः।
द्वितीयार्थे— प्राचुर्यविशिष्टवस्तु यस्मिन् अधिकरणे तस्य बोधः।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु स्वार्थिकाः

# स्वार्थे 'अण्'प्रत्ययः

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— प्रज्ञादिभ्यश्च (५,४.३८)**

अर्थः— प्रज्ञ इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थे अण् स्यात्।

- प्रज्ञ एव= प्राज्ञः। प्राज्ञी स्त्री।
- देवता एव= दैवतः।
- बन्धुरेव = बान्धवः॥

प्रज्ञ + अण्
प्राज्ञ् + अ
प्राज्ञः

**प्रज्ञादिगणः—**

प्रज्ञ। वणिज्। उशिज्। उष्णिज्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। **गणसूत्रम्—** श्रोत्र शरीरे श्रौत्रम्। **गणसूत्रम्—** जुह्वत् कृष्णमृगे। चिकीर्षत्। चोर। शत्रु। योध। चक्षुस्। वक्षस्। धूर्त। वस्। एत्। मरुत्। क्रुङ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। आकृतिगणोऽयम्।

१. (चोर) चोर एव चौरः [चोर]।
२. (वणिज्) वणिग् एव वाणिजः [बनिया]।
३. (योध) योध एव यौधः [योधा, लड़ाकू]।
४. (शत्रु) शत्रुरेव शात्रवः [शत्रु, दुश्मन]।
५. (मनस्) मन एव मानसम् [मन]।
६. (रक्षस्) रक्ष एव राक्षसः [राक्षस]।
७. (पिशाच) पिशाच एव पैशाचः [पिशाच]।
८. (असुर) असुर एव आसुरः [दैत्य]।
९. (मरुत्) मरुद् एव मारुतः [वायु]।
१०. (वयस्) वय एव वायसः [कौवा]।
११. (क्रुञ्च्) क्रुङेव क्रौञ्चः [क्रौञ्च पक्षी]।

प्रज्ञादि के आकृतिगण होने के कारण—

१२. (चर) चर एव चारः [गुप्तचर]।
१३. (कुतूहल) कुतूहलमेव कौतूहलम् [उत्सुकता]।
१४. (चरित्र) चरित्रमेव चारित्रम् [चरित्र]।
१५. (चण्डाल) चण्डाल एव चाण्डालः [चण्डाल]।
१६. (जेतृ) जेतैव जैत्रः [जीतने वाला]।

# स्वार्थे 'शस्'प्रत्ययः | सार्वविभक्तिकः 'तसिँ'प्रत्ययः



{मूलपाठः}

❖ शस्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् (५,४.४२)

**अर्थः—** बह्वर्थाद् अल्पार्थाच्च कारकाभिधायिनः प्रातिपदिकात् स्वार्थे तद्धितः 'शस्'प्रत्ययः स्यात्।

- बहूनि ददाति= बहुशः।
- अल्पशः। ✓ अल्पानि धनानि ददाति।

**वार्तिकम्—** आद्यादिभ्यस्तसेरुपसङ्ख्यानम्।

**अर्थः—** आद्यादिगणे विद्यमानेभ्यः प्रातिपदिकेभ्यः सार्वविभक्त्यर्थेषु तसिँ-प्रत्ययः स्यात्।

- आदौ= आदितः। ○ मध्यतः। ○ अन्ततः।
- पृष्ठतः। ○ पार्श्वतः।
- आकृतिगणोऽयम्। स्वरेण= स्वरतः। वर्णतः॥

✓ बहूनि धनानि ददाति (कर्मकारकम्)
✓ बहुभिर् ददाति (करणकारकम्)
✓ बहुभ्यो ददाति (सम्प्रदानकारकम्)
✓ बहुषु ददाति (सम्प्रदानकारकम्)

बहु + शस्

**बहुशः** (तद्धितश्चासर्वविभक्तिः)

✓ आदौ इति
✓ आदेः इति

आदि + तस्

**आदितः** (तद्धितश्चासर्वविभक्तिः)

बह्वर्थकाः— बहु, भूरि, प्रभूतम्।
अल्पार्थकाः— अल्पम्, स्तोकम्, कतिपयः।

# ‘च्विँ’प्रत्ययस्य प्रक्रियार्थनिरूपणम्



{मूलपाठः}

❖ ‘च्विँ’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** कृभ्वस्तियोगे सम्पद्यकर्तरि च्विँः[1] (५,४.५०)

**वार्तिकम्—** अभूततद्भाव इति वक्तव्यम्।

**वार्तिकार्थः—** येन रूपेण प्रागभूतं यद्वस्तु तस्य तद्रूपप्राप्तावेदं सूत्रं प्रवर्तते।

**सूत्रार्थः—** विकारात्मतां= कार्यरूपतां प्राप्नुवत्यां प्रकृतौ= समवायिकारणे वर्तमानाद् विकारशब्दात्= कार्यवाचकाद् घटादिशब्दात् स्वार्थे च्विँर्वा स्यात् करोत्यादिभिर्योगे।

❖ ईत्व-विधायकं विधिसूत्रम्—

**सूत्रम्—** अस्य च्वौ (७,३.३२)

**अर्थः—** अवर्णस्य ईत्स्यात् च्वौ।

- वेर्लोपे च्व्यन्तत्वादव्ययत्वम्।
- अकृष्णः कृष्णः संपद्यते तं करोति= कृष्णी करोति।
- ब्रह्मी भवति
- गङ्गी स्यात्।

अकृष्णं कृष्णं सम्पद्यमानं करोतीति
अकृष्णः— प्रकृतिः, कृष्णः— विकारः।
कृष्ण अम् (करोति) + च्विँ
कृष्णी (करोति) + ~~च्विँ~~
कृष्णी करोति (स्वरादिनिपातमव्ययम्)

अब्रह्म ब्रह्म सम्पद्यमानं भवति— ब्रह्मी भवति

अगङ्गा गङ्गा सम्पद्यमानं स्यात्— गङ्गी स्यात्

च्विप्रत्ययः
- अभूततद्भावे
- विकारवाचकाद्
- कृ-भू-अस् योगे

१- यस्य यो भावी न भूतः स तद्भावं चेत्सम्पद्यते तस्मिन्नभूततद्भावे वर्तमानात्सम्पत्तिक्रियाकर्तृभूतात्प्रातिपदिकात् कृभ्वस्तीनां धातूनां योगे च्वि प्रत्ययो भवति—इति

# अभूततद्भावे 'सातिँ'प्रत्ययः



{मूलपाठः}

❖ वैकल्पिक-सातिँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— विभाषा सातिँ कार्त्स्न्ये (५,४,५२)**

**अर्थः—** च्विँविषये सातिँर्वा स्यात् साकल्ये॥

❖ षत्वनिषेधकं विधिसूत्रम्—

**सूत्रम्— सात्पदाद्योः (८,३.१११)**

**अर्थः—** (सातेरवयवस्य पदादेश्च) सस्य षत्वं न स्यात्।

- कृत्स्नं शस्त्रमग्निः सम्पद्यते= अग्निसाद् भवति।
- दधि सिञ्चति॥

❖ दीर्घ-विधायकं विधिसूत्रम्—

**सूत्रम्— च्वौ च (७,४.२६)**

**अर्थः—** च्वौ परे पूर्वस्य दीर्घः स्यात्।

- अग्नी भवति॥

| | |
|---|---|
| अग्नि सुँ + सातिँ | अग्नि सुँ + च्विँ |
| अग्नि + सात् (भवति) | अग्नी + (भवति) |
| अग्निसाद् भवति | अग्नी भवति |
| (तद्धितश्चासर्वविभक्तिः) | (स्वरादिनिपातमव्ययम्) |

षत्वं न
- सात्-प्रत्ययसकारस्य
- पदादेः सकारस्य

✓ कृत्स्नं लवणम् उदकं सम्पद्यते— उदकसाद् भवति लवणं वर्षासु। उदकी भवति।

✓ कृत्स्नं गृहं भस्म सम्पद्यते— भस्मसाद् भवति गृहम्। भस्मी भवति।

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु स्वार्थिकाः

# ‘डाच्’प्रत्ययः, द्वित्वम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ डाच्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्**— अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् (५,४.५७)

**अर्थः**— (द्वित्वे कृते सति) द्व्यजेवावरं= न्यूनं न तु ततो न्यूनमनेकाजिति यावत्, तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे ।

**वार्तिकम्**— डाचि विवक्षिते द्वे बहुलम्।

○ इति डाचि विवक्षिते द्वित्वम्।

**वार्तिकम्**— नित्यमाम्रेडिते डाचीति वक्तव्यम्।

**अर्थः**— डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्।

○ इति तकारपकारयोः पकारः— पटपटाकरोति।

○ अव्यक्तानुकरणात्किम् ? ईषत्करोति।

○ द्व्यजवरार्धात्किम् ? श्रत्करोति। (अत्करोति इति चेन्नैसंस्करणे पाठः।)

○ अवरेति किम् ? खरटखरटाकरोति।

○ अनितौ किम् ? पटिति करोति॥

॥ इति स्वार्थिकाः॥

॥ इति तद्धिताः॥

१- ‘डाचि विवक्षिते द्वे बहुलम्’ इति वार्तिकेन डाचः प्रागेव पटत्शब्दस्य द्वित्वे ‘पटत्पटत्’ इति जातम्, तत्रैकः पटत्शब्दस्तदर्द्धम्, तत्र यदि न्यूनं चेदस्ति तदा द्व्यजेव, न तु द्व्यचोऽपि न्यूनमेकाच् पटत्शब्दः एवं तादृशमर्द्धं यस्य समुदायस्य ‘पटत् पटत्’ इत्यस्य तस्मात्समुदायाड्डाच्प्रत्यये परस्य ‘पटत्’ इत्यस्य ‘तस्य परमाम्रेडितम्’ इत्याम्रेडितसंज्ञायाम्, ‘नित्यमाम्रेडिते डाचि—’ इति वार्तिकेन पूर्व ‘पटत्’ इत्यस्य तकारस्य पर ‘पटत्’ इत्येतस्य पकारस्य च पररूपे परत्र टिलोपे ‘पटपटाकरोति’ इति सिद्धम्॥

पट त् + प टत् + आ (करोति)

पट + प टत् + आ (करोति)

पटपट् + आ (करोति) (टेः)

(स्वरादिनिपातमव्ययम्)

# प्राग्दिशीय-प्रागिवीय-स्वार्थिकप्रकरणानां परीक्षणम्

**०१. 'प्राग्दिशो विभक्तिः' इति सूत्रेण विभक्त्यधिकारः कस्मात् सूत्रात् प्राग्वर्तते ?**

क. पञ्चम्यास्तसिँल्

ख. किं-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः

ग. अनद्यतने र्हिलन्यतरस्याम्

**घ. दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देशकालेष्वस्तातिः**

**०२. प्राग्दिशीयप्रकरणे कः प्रकृत्यधिकारो नास्ति—**

क. किम्

ख. बहु

**ग. द्वि**

घ. द्व्यादिभिन्नं सर्वनाम

**०३. 'कुतः' इत्यस्य विग्रहवाक्यं किम् ?**

क. कस्मिन्

**ख. कस्मात्**

ग. कस्य

घ. केन

**०४. 'इतः' इत्यस्य का प्रकृतिः—**

क. एतद्

**ख. इदम्**

ग. इश्

घ. अदस्

**०५. 'इह' इत्यत्र कः प्रत्ययः?**

**क. ह**

ख. त्रल्

ग. तसिँल्

घ. इह

**०६. 'क्व' इत्यत्र कस्मिन् अर्थे कः प्रत्ययः ?**

क. सप्तम्यर्थे त्रल् प्रत्ययः

ख. पञ्चम्यर्थे तसिँल् प्रत्ययः

**ग. सप्तम्यर्थे अत् प्रत्ययः**

घ. पञ्चम्यर्थे अ-प्रत्ययः

**०७. 'सदा' इत्यत्र मूलप्रकृतिभागः अस्ति—**

क. सर्व

**ख. स**

ग. सत्

घ. इदम्

**०८. 'तर्हि' इत्यत्र कः प्रत्ययः ?**

क. हि

**ख. र्हिल्**

ग. हिल्

घ. इ

**०९. शुद्धं चिनुत—**

क. अनेन प्रकारेण= इत्थम्।

ख. एतेन प्रकारेण= इत्थम्।

ग. येन प्रकारेण यथा।

**घ. केन प्रकारेण कथा।**

**१०. 'तमबिष्ठनौ' प्रत्ययौ कस्मिन् अर्थे भवतः—**

क. स्वार्थे

**ख. अतिशायने**

ग. अधीते अर्थे

घ. प्रकारार्थे

**११. 'घ' सञ्ज्ञा कस्यास्ति ?**

क. इष्ठन्-प्रत्ययस्य

ख. आम्-प्रत्ययस्य

**ग. तरप्-प्रत्ययस्य**

**घ. तमप्-प्रत्ययस्य**

**१२. द्विवचनविभज्योपपदे तरबीयसुँनौ इति सूत्रविषये इदं कथनं सङ्गतं नास्ति—**

क. 'द्व्यर्थवाचके शब्दोपपदे' इदं सूत्रं प्रवर्तते।

ख. 'पञ्चमी विभक्तेः' इति सूत्रविहिते पञ्चम्यन्ते उपपदे' इदं सूत्रं प्रवर्तते।

**ग. अनेन तमप्-प्रत्ययः अपि भवति।**

घ. सुबन्तात् तिङन्ताच्च अनेन प्रत्ययो भवति।

**१३. 'श्रेष्ठः' इत्यस्य मूलप्रकृतिभागः अस्ति—**

क. श्र

ख. श्री

**ग. प्रशस्य**

घ. प्रशस्त

**१४. 'ज्यादादीयसः' इति सूत्रेण किं भवति ?**

क. षत्वविधानम्

ख. ज्य-आदेशविधानम्

ग. श्र-आदेशविधानम्

**घ. आत्-विधानम्**

**१५. 'भूमा' इत्यत्र कः प्रत्ययः ?**

**क. इमनिँच्**

ख. इष्ठन्

ग. ईयसुँन्

घ. मनिँन्

**१६. 'बलिष्ठः' इत्यस्य विग्रहवाक्यं किम् ?**

क. अयम् एषाम् अतिशयेन बलम्

**ख. अयम् एषाम् अतिशयेन बलवान्**

ग. अयम् एषाम् अतिशयेन युवा

घ. अयम् एषाम् अतिशयेन साधीयान्

**१७. 'नेदीयान्' इति पदस्य कोऽर्थः ?**

**क. अत्यन्तं समीपः**

ख. अत्यन्तं दूरम्

ग. अत्यन्तं ह्रस्वः

घ. अत्यन्तं दीर्घः

**१८. 'विद्वत्कल्पः' इत्यस्य कोऽर्थः ?**

क. अत्यन्तं विद्वान्

**ख. किञ्चित् विद्वान्**

ग. विद्वान् भिन्नः

घ. सम्पूर्णविद्वान्

**१९. एतेषु क-प्रत्ययः कुत्र ?**

**क. अश्वकः।**

ख. उच्चकैः।

ग. नीचकैः।

घ. सर्वके।

**२०. 'कतरः' इत्यत्र कः प्रत्ययः ?**

क. र

ख. तरप्

ग. डतरच्

घ. डतमच्

**२१. 'अश्वकः' इति रूपं कस्मिन् अर्थे न निष्पद्यते—**

क. अज्ञातः अश्वः

ख. अश्व एव

ग. अश्व इव प्रतिकृतिः

घ. प्रसिद्धः अश्वः

**२२. एतेषु प्रचुराधिकरणे द्योत्ये कुत्र मयट् ?**

क. अपूपमयं पर्व

ख. अपूपमयम्

ग. अन्नमयम्

घ. रसमयम्

**२३. 'दैवतः' इत्यस्य कोऽर्थः ?**

**क. देवता**

ख. देवतायाः पुत्रः

ग. देवतायां साधु

घ. देवतायाः रूपम्

**२४. 'बहूनि ददाति' इति विग्रहे किं रूपम् ?**

**क. बहुशः**

ख. बहुतः

ग. बहुदः

घ. भूरिशः

**२५. 'कृष्णी करोति' इत्यत्र कः तद्धितप्रत्ययः ?**

क. क्विँप्

**ख. च्विँ**

ग. ऊ

घ. ई